# प्राकृत व्याकरणम्

(प्राकृत प्रकाशस्य सुबोधिनी, सञ्जीवनी, प्राकृतमञ्जरी, मनोरमा, अम्बिका इति पञ्च व्याख्याभिः संवलितः)



डॉ० सलिला नायक 'अञ्जलि'

# प्राकृत व्याकरणम्

(प्राकृत प्रकाशस्य सुबोधिनी, सञ्जीवनी, प्राकृतमञ्जरी, मनोरमा, अम्बिका इति पञ्च व्याख्याभिः संवलितः)


लेखिका

डॉ॰ सलिला नायक 'अञ्जलि'

अध्यापिका, रामाधीन संस्कृत महाविद्यालय

ब्रह्मपुरम्, गञ्जाम (उड़ीसा)






प्रतिभा प्रकाशन

दिल्ली

पूज्यपादगुरुदेवानाम्
अम्बिकाचरणानां
करकमलयोः
सादरमिदं
समर्प्यते

# भूमिका

अर्वाचीन विज्ञानयुगस्य भाषाक्षेत्रे प्राकृत भाषायाः सुमहत्स्थानं वर्त्तते इति सुविदितमेव। प्राकृतभाषा विषयकाध्ययनप्रवृत्तिर्मुख्यतो भाषाणां परस्परं कञ्चन साम्य विशिष्टं भेदमवलम्ब्येव जाता।

उपलभ्यमानेषु ग्रन्थेषु वेदस्तावत् सर्वेभ्यः प्राचीन इति तु सर्वैरेवाभ्युपगम्यते। तथा चोपलभ्यमानासु भाषासु वेदभाषा सर्वतः पुरातनीत्यत्रापि न कश्चिदपि विवदितुमुत्सहेत। अयं च वेदो येषां मते अनादिरीश्वरप्रणीतः, तन्मते नापरमवशिष्यते वक्तुम्। ये तु वेदमनादिं नाभ्युपगच्छन्ति ते एव कल्पयन्ति – वेद भाषातोऽपि प्रागासीत् काचन भाषेति। सा च प्रकृतिसिद्धत्वात् प्राकृतपदेनाभिधेया। तस्याः परिष्कृतं रूपं वेदभाषा, सैव च किंचिद् वैलक्षण्यमाप्ता संस्कृतभाषात्वमापेदे।

यूरोपीयास्तदनुयायिनश्च अद्यानुमिन्वते यत् वैदिक भाषातः पूर्वमासीत् काचन प्राकृतमिति समाख्याता भाषा, ततएव समुत्पन्ना वैदिकी भाषा संस्कृत भाषा च। नाटकेषुपलभ्यमाना विविधाः प्राकृतभाषा अपि तत एव समुदपद्यन्त। अन्या अपि च यूरोपीयादि भाषा स्तस्या एव सन्तती भूताः। तस्याः किमासीत् स्वरूपं कियांश्च प्रसिद्धायाः संस्कृतभाषाया अपेक्षया, वैदिक भाषापेक्षया वा तत्रासीद् भेद इति तु न केनाप्यद्या-वधि निर्णेतुं पारितम्, परमासीत् सेति सर्वेऽपि रारटन्ति। स्वभाव एवैष यूरोपीयाणां यत्ते प्रसिद्धं परित्यज्याप्रसिद्धमूलं परिकल्पयितुं भवन्ति संनद्धा इति। यथा मनुष्यादेव मनुष्योत्पत्तिरिति न ते क्षमन्ते, किन्तु मनुष्याणां मूलभूता काचन अप्रसिद्धा गोरेला जातिरिति प्रतिष्ठापयन्ति। तथैवात्रापि सुपसिद्धायाः संस्कृतभाषाया भाषान्तराणामुत्पत्तिर्न तेभ्यो रोचते, अपितु मूलभूता काचिदन्यै वासीद् भाषेतिकल्पनं तान् प्रीणयति।

अत्र तु युक्तिरेषा समुपन्यस्यते यत् "प्राकृतम्" संस्कृतम्" इति

च भाषयोर्नामैवैकस्याः कृत्तिमत्वम् अपरस्याश्च सर्वादित्वं ख्यापयति। संस्कृत मिति कृतसंस्कारां वाचमाचष्टे पदम्। नहि संस्कारेण विना संस्कृतमिति केनाप्युच्यते। संस्कारश्च मनुष्यक्रियया निष्पाद्य इति स्पष्टं कृत्रिमत्वं संस्कृतभाषायाः।

वैदिक भाषायाः शब्दा अपि मूलभूतैः शब्दान्तरैर्निष्पादिता इति श्रुतिष्वेव सुस्पष्टमुपलभामहे। तद्यथा–

**इन्द्रः**

१. "स योऽयं मध्ये प्राणः, एष एवेन्द्रस्तानैष प्राणान् मध्यत इन्द्रियेणैन्द्धत तस्मादिन्ध, इन्धो हवै तमिन्द्र इत्याचक्षते परोक्षम्, परोक्षकामा हि देवाः"। (शत. ब्रा., ६.१.१.२२)

२. "इन्धो वै नामैष योऽयं दक्षिणेऽक्षम् पुरुषस्तं वा। एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः"।

(शत. ब्रा., १४.६.११.२)

३. "इदमदर्शमितीइँ तस्मादिन्द्रो हवै नाम, तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः।"

(तैत्तिरी. ब्रा., २.२.१०.६३)

**अङ्गिराः**

१. "संतप्तस्य सर्वेभ्योऽङ्गेभ्योरसोऽक्षरत्सोङ्गरसोऽभवत्तं वा एतमङ्गरसं सन्तमङ्गिरा इत्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः"। (गो. ब्रा., २.१.७)

२. अङ्गिरसोऽङ्गानां हि रसः। (शत. ब्रा., १४.४.१८)

३. अतो हीमान्यङ्गानि रसं लभन्ते तस्मादङ्गिरसः"

(जैमिनी उप., २.४.२.८)

**अन्तरिक्षम्**

१. "यदस्मिनिदं सर्वमन्तस्तस्मादन्तरिक्षम् अन्तयक्षं ह वै नामैतत्, तदन्तरिक्षमिति परोक्षमाचक्षते"॥ (जैमिनी. उ., १.२०.४)

२. "अन्तरेव वा इदमिति तदन्तरिक्षस्यान्तरिक्षत्वम्"।

(ताण्डयमहा ब्रा., २०.१४.२)

३. "पुरान्तरा वा इदमीक्षमभूदिति तस्मादन्तरिक्षम्"।

(शत. ब्रा., ७१.२.२३)

**अग्निः** – स यदस्य सर्वस्याग्रमसृज्यत, तस्मादग्नि रग्रिर्हवै तमग्निरित्याचक्षते। (शत. ब्रा., ६.१.१.११)

**हिरण्यम्** – "देवाः तस्माद्धिरम्यां हिरण्यं हवै तद्धिरण्य मित्याचक्षते"।

(शत. ब्रा., ७.४.१.१६)

**स्वेदः** – "तस्मात्सुवेदोऽभक्तं वा सुतं सुवेदं सन्तं स्वेद इत्याचक्षते"।

(गो. ब्रा., १.१)

**स्वप्नः** – "प्राणः स्वा अपयन्ति तस्मात्स्वाप्ययः स्वाप्ययो ह वै तं स्वप्न इत्याचक्षते"। (शत. ब्रा., १०.३.६)

**मानुषम्** – "यदब्रुवन् भेदं प्रजायते रेतो दुषदिति तन्मादुषमभवत्तन्मादुषत्वं हवै नामैतद्यन्मानुषं तन्मादुषं सन् मानुषमित्याचक्षते"।

(ताण्डय महा ब्रा., ८.२.१०)

**स्वपितिः** – "यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति, स्वमपीतोभवति तस्मादेनं स्वपितीत्याचक्षते, स्वं ह्यपीतो भवति।"

(छान्द. उप., ६.८)

**रथन्तरम्** – "रसं तमं ह वै तद्रथन्तरमित्याचक्षते परोक्षम्"।

(शत. ब्रा., ९.१.२.३६.२)

**पुरुषः**

१. "प्राण एष स पुरि शेते इति पुरिशयं सन्तं प्राणं पुरुष इत्याचक्षते परोक्षेण"। (गो. ब्रा., १.१.३९)

२. इमे वै लोकाः पूरयमेव पुरुषो योऽयं पवते सोऽस्यां पुरि शेते तस्मात्पुरुषः" (शत. ब्रा., १३.६.२१)

३. "पूर्वमेवाहमीहाऽऽसमिति तत्पुरुषस्य पुरुषत्वम्"।

(तैत्ति. आ., २३.१.२)

मघवान् – "तत इन्दो मखवानभवन् मखवान् तं मघवानित्याचक्षते परोक्षम्। (शत. ब्रा., १४.१.१.१३)

**वरुणः** – "यच्च वृत्वाऽतिष्ठत्तद् वरणोऽभवत्तं वा एतं वरणं सन्तं वरुण इत्याचक्षते परोक्षेण" (गो. ब्रा., १.७)

निरुक्ते च बहवयो व्युत्पत्तयः समुपलभ्यते। तद्यथा–

**इन्द्रः** – इरां दृणातीति वा, इरां ददातीति वा, इरां धारयत इति वा, इरां दारयत इति वा, इन्दवे द्रव्रतीति वा, इन्दौ रमत इति वा, इन्धे भूतानीति वा, "तद्यदेनं प्राणैः समैन्धस्तदिन्द्रस्येन्द्रत्वमिति" विज्ञायते, इदं करणादित्याग्रायणः। इदं दर्शनादित्यौपमन्यवः, इन्दतेर्वा ऐश्वर्यकर्मणः, इन्द्रञ्छत्रुणां दारयिता वा, द्रावयिता वा, आदरयिता च यज्वनाम्"।

(निरुक्त १०.१.८)

**निघण्टुः** – "ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्ते, अपि वा हननादेव स्युः समाहता भवन्ति। यद्वा समाहृता भवन्ति।

(निरुक्त १.१.१)

**अन्तरिक्षम्** – अन्तराक्षान्तं भवति, अन्तरेमे क्षियति इति वा, शरीरेष्वन्तरक्षयमिति वा"। (निरुक्त २.३.१०)

**कुचरः** – चरति कर्म कुत्सितम्, क्वाथं न चरतीति।

(निरुक्त. १.६.२०)

**हिरण्यम्** – ह्रियते आयम्यमानमिति वा, ह्रियते जनाज्जनमिति वा, हितं रमणं भवतीति वा, हर्यते वा स्यात् प्रेप्साकर्मणः।

(निरुक्त. २.३.१०)

**शृङ्गम्** – श्रयतेर्वा, श्रुणातेर्वा, शम्नातेर्वा, शरणायोद्गतमिति वा, शिरसो निर्गतमिति वा। (निरुक्त. २.२.७)

**दधिक्राः** - (अश्वः) – "दधत् क्रामतीति वा, दधत् क्रन्दतीति वा।

(निरुक्त. २ अ. ७.१८)

वासरम् – वासराणि, वेसराणि विवासनानि, गमनानीति वा।

(निरुक्त. ४.१.७)

द्वाभ्यां शीतोष्ण रात्रिंदिवमनारतं सरन्ति गच्छन्तीति वेसराणि सन्ति वासराणि भवन्ति, पृषोदरादित्वात् वे, वा भावौ स्तः।

विंशतिः – द्विर्दशतः। (निरुक्त. ३.२.१०) इत्यादि।

तथा च पुराणेऽपि–

**प्रणवः**

"प्रो हि प्रकृति जातस्य संसारस्य महोदधेः।
नवं नावान्तरमिति "प्रणवं" वै विदुर्बुधाः"॥
"प्र प्रपंचो न नास्ति वो युष्माकं प्रणवं विदुः।
प्रकर्षेण नयेद्यस्मान्मोक्षं वः प्रणवं विदुः"॥

(शिवपुराण १७.४.५)

**पूजा**

पूर्जायते ह्यनेनेति वेदेष्वर्थस्य योजना।
प्रयोगफलसिद्धिश्च जायते तेन कर्मणा॥
मनोभावांस्तथा ज्ञानमिष्ट भोगार्थयोजनात्।
पूजाशब्दार्थ एवं हि विश्रुतो लोकवेदयोः॥

(शिवपुराण १६.२९-३०)

**जीवः**

जीर्यते जन्मकालाद्यत्तस्माज्जीव इति स्मृतः।
जन्यते तन्यते पाशैर्जीवशब्दार्थ एव हि॥

(शिवपुराण १६.९९)

एवं च सुस्पष्टमिदमनुमीयते यत् "अङ्गिरस्" शब्द एव पूर्वं प्रचलितः पश्चात् "अङ्गिरा" शब्दतां गतः। एवम् "इन्ध" (इदन्द्र) शब्द एव पूर्वं प्रचलितः पश्चाच्च इन्द्र शब्दतां गत इत्यादि।

तथा च मूलभूत शब्द घटिता काचिदन्यै वासीत् सर्वप्रथमा भाषा, यतो वैदिक-भाषायाः, संस्कृत भाषायाः, विभिन्नानां प्राकृतानाम्, वैदेशीय भाषाणां चोत्पत्तिरूपपत्तिमवगाहते। सन्ति च वैदिक-भाषायामपि तथा विधाः शब्दाः ये संस्कृतशब्दप्रकृतिप्रतिकूला भवन्ति। यथा "तितउ" शब्दः। एकस्मिन्नेव पदे अव्यवधानेन द्वयोः स्वरयोः प्रयोगः संस्कृतभाषायाः प्रकृतेर्विरुद्धः, अन्यत्र तथानुपलब्धेः। प्राकृतेषु हि "अ अ" इत्यादौ

बाहुल्येन व्यञ्जनाव्यवहितानां स्वराणां प्रयोग उपलभ्यते। तथैव मूलप्राकृतेपि संभाव्यत इति। तत एव "तितउ" पदं संगृहीतं स्यात्। तदेवं वैदिक-भाषातः पूर्वमपि भाषान्तरसत्ताऽनुमीयते, तच्च प्राकृतपदेनाभिलप्यमिति। प्राकृतस्य प्रवाह न केनापि रोद्धुं शक्यः, तदुच्चारणभेदकृता भाषाभेदा वाहुल्येन प्रववृत्तिरे। तदुक्तं हरिणा–

"दैवी वाग्व्यवकीर्णेयमशक्तैरभिधातृभिः इत्यादिना (वाक्य, १.१५६)। महाभाष्यकाले हि वहवो भाषाभेदाः प्रवृत्ता इत्यनुमीयते तदुक्तमसकृन् महाभाष्यकृता पतञ्जलिना–

भूयांसोऽपशब्दाः, अल्पीयांसः शब्दाः, इति, एकैकस्य हि शब्दस्य वहवोऽपभ्रंशाः, तद्यथा– गौरित्यस्य शब्दस्य गावी, गोणी, गोता, गोपतलिकेत्यादयो वहवोऽपभ्रंशाः, इति। इदमपि चोक्तम्–

"समानायामर्थावगतौ शब्देन चापशब्देन च धर्म नियमः क्रियते - शब्दे नैवार्थोऽभिधेयो नापशब्देनेति" (व्या. महा. पस्पशा)।

एतेन स्पष्टमिदं प्रतीयते यदपशब्द घटितयापि भाषया व्यवहरन्तिस्म लोकाः। तथापि च प्रकटी कृतस्वाभिप्रायोऽन्येन वुध्यते स्म।

स एष भाषाभेदप्रवाहः क्रमेण वाहुल्य मापेदे। तत एव "संस्कृतम्", "प्राकृतम्" इति नामभेदः प्रवृत्तो भाषासु। प्राकृतमपि च देशभेदेन बहून्, भेदानवाप्तम्।

विनैव शिक्षां प्रकृत्या या सम्मुच्चारिता आसीद् भाषा, सा प्रकृतियुक्ता प्राकृतमित्युच्यते स्म। या तु प्राप्तशिक्षासंस्कारैर्विद्वभिरुच्चार्यते स्म सा संस्कृतमिति नाम्ना व्यवह्रियते स्म। स एष मध्यमकालः।

प्राकृतशब्दं हि द्वेधा व्युत्पादयन्ति समीक्षाचणाः। प्रकृतिः संस्कृतम् तत आगतं प्राकृतमिति प्राकृतव्याकरणकर्त्तार आहुः। प्रकृत्योच्चारितं प्राकृतमिति तु ऐतिहासिकाः।

संस्कृतशब्दो हि प्राचीनेषु ग्रन्थेषु वाल्मीकि रामायण एव प्रथमतः उपलब्धः। तथाहि सुन्दरकाण्डे सीता दर्शनसमये हनुमतो विचाराः–

अहं ह्यतितनुश्चैव वानरश्च विशेषतः।

वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम्॥

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मां सीता भीता भविष्यति॥
(वा. रा. सु. ३०.१७.१८)

एतेनोक्त – रामायण – वचनमवलम्ब्य ये द्विजातीनामेव संस्कृतोच्चारणाधिकारं साधयन्ति, शूद्राश्च संस्कृताध्ययनात् तदुच्चारणाद् वा वहिः कुर्वन्ति, तेऽपि भ्रान्ता एव सिद्धयन्ति। यदि द्विजातीनामेव संस्कृतोच्चारणं तदात्वे रुद्धमभविष्यत्, स्त्री-शुद्रौ-च नाटकादिकाले एव प्राकृत भाषिणाभविष्यताम् प्राकृत भाषणाभविष्यताम्, तर्हि सीतायाः प्रवोधनाय प्रत्युत प्राकृतभाषैव समुपायोक्षयत् स्त्रीणां प्राकृतभाषायामेव विशेषेण परिचयात्।

अनेन सुस्पष्टमिदं सिद्धं यत् प्राकृतमिति प्रसिद्धा भाषा संस्कृतादुत्पन्ना विनैव शिक्षां व्यवहारेण गृह्यमाणा चासीदिति। सर्वेऽपि शब्दपरिवर्त्तननियमाश्चतुर्धा विभज्य प्राक्तनैः शिष्टैः प्रदर्शिताः– वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ'' इति। एभिरेव चतुर्भि प्रकारैः शब्दानां परिवर्त्तनं भवति। संस्कृतशब्द निर्माणे प्रकृतिप्रत्ययादियोगे, पदस्य पदान्तरयोगे वा ये भवन्ति विकारास्तेषां नियमाः संस्कृत व्याकरणे प्रदर्शिता, तादृशं प्राकृतशब्द निर्माणे च ये ये विकारा भवन्ति तेषां नियमाः प्राकृतव्याकरणेषु दर्शिताः।

इदन्तु दृश्यते ये नियमाः पाणिन्यादिभिः सन्ध्यादिषु प्रदर्शिता स्ते व्यापकरूपेण तत्तत्सूत्रप्रदर्शितानुपाधीन् विहाय स्वातन्त्र्येणापि भाषानिर्माणे साहाय्यमादधाना दृश्यन्ते। तेन प्राकृता एव विकारा यावदुपलम्भं सूत्रकारैर्निदिष्टा इत्यपिसिद्धयति। यथा ''उदः स्थास्तम्भोः पूर्वस्य'' (पा.सू. ८.४.६१) इति सूत्रेण उद् उपसर्गात् परः स्था धातोः सकारो न तिष्ठतीति पाणिनिना पदर्शितम्, परमुदुपसर्गविरहेऽपि स्थाधातुसकारलोपो दृश्यते पादस्थलम् - पग्थली, वनस्थलम् - वनथली।

तथैव ''झयो होऽन्यतरस्याम्'' इति वर्ण विशेषेभ्यः परस्य हकारस्यैव चतुर्थवर्णत्वं पाणिनिना विहितम्, परं वर्णान्तरेभ्यः परस्यापि चान्यत्रापि दृश्यते, यथा गुहागुफा, सिंह-सिंघ, इत्यादि।

वर्णा अपि केचन तथास्वभाव ये विपर्यासे साहाय्यं ददति। विपरिणामो विपर्यास एव वा तेषां स्वभावः, रेफ ऊष्माणो वर्णाश्च तेषु मुख्याः। श्रुत्याप्यूष्मणां भाषाजनकत्वे प्राधान्यमुक्तम्–

"अकार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति"। (वै. म. स्फो. निरूपणम्)

भगवान् पाणिनिरपि उष्मणां नानाप्रकृतित्वमाह–

**ओभावश्च विवृतिश्च शषसा रेफ एव च।**

**जिह्वामूलमुपध्मा च गतिरष्टविधोष्मण॥**

**(पाणिनिय शिक्षा. १४)**

**अत्रोष्मणः** – ऊष्माबलविशेषः तस्य प्राधान्येनाभिव्यक्ति र्विसर्गो विभिन्नेषु स्थानेस्वष्टाभिर्विधाभिः परिणगत इति पाणिने राशयः। उपलक्षणमिदमूष्म-प्रधानो हकारोऽपि बहुधा विपर्यस्यन् दृश्यते। एषां चाष्टाना विभिन्नाः संज्ञा अप्याह याज्ञवल्क्यः–

**"ओभावमागता योष्मा तां तु केलिं विनिर्दिशेत्।**

**विवृतिप्रत्ययादष्मा विज्ञेया विकटानना॥**

**पादादौ च पदादौ च संयोगावग्रहेषु च।**

**लीढातिलीढा विद्युच्च शषसेषु प्रकीर्त्तिता॥**

**जिह्वामूले च रेफे च विज्ञेया विकटा शठा।**

**उपध्मानीयसहितां पुष्पिणी तां विदुर्बुधाः॥**

**अन्यत्रं या भवेदूष्मा सुलभां तां विनिर्दिशेत्।**

**ऊष्मप्राधान्यमेतस्मात्तस्मात्तां यत्नतोडभ्यसेत्॥ इति**

**(वर्ण समीक्षा, पृ. ५०)**

तथैव शषसा अपि विपर्यस्यन्तो दृश्यन्ते। किंच वर्गाणां प्रथमतृतीयाश्च वर्णा एतदूष्मसंयोगे द्वितीय चतुर्थतां गच्छन्ति, द्वितीयचतुर्थाश्चोष्मापगमे प्रथमतृतीयतामूष्मकृतमेव महाप्राणत्वम्। एतद् वर्णघटितानां च पदानां प्रायेण शीघ्रं विपर्यासो दृश्यते। यथा "गृह" पदे हकारो यदा

गकारोपर्यागच्छति, उष्मयोगे ग कारो धकारत्वं गतः, ऋकारघटितो रेफश्च अज्भक्तेरनन्तरं गतस्सन् अकारेण संयुज्यते, तदा "घर" इति रूपं भवन्ति। तथा "प्रस्तर" शब्दे सकारस्योष्मणस्तकारोत्तरं गतस्य थभावे "पत्थर" इति भवति। भवति पद च भकार घटकस्योष्मणः पृथग्भावात् वकारस्य च लोपात् "होदि", "होत" "होता" इत्यादि रूपाणि गच्छन्ति। कुम्भकार शब्दे मकारघटकस्योष्मणः पृथग्भावात् ककारस्य च लोपात् "कुम्हार" इति रूपं प्राप्नोतीत्यादि बहुतरमूष्मणो विपर्यायो दृश्यते।

रेफस्तु संस्कृतात् प्राकृतनिर्माणे प्रायेणा स्तमेव गच्छति – आर्य – अज्ज, पुत्र-पुत्त, मूर्ति - मूत्ती, धर्म – धम्म, कर्म – कम्म, चर्म – चम्म, कर्ण – कण्ण, पर्ण – पण्ण, सर्प – सप्प, दर्दूर – दद्दुर इत्यादौ।

मूर्धन्यश्च षकारः प्रायेण खकाररूपतां याति पुष्कर - पोक्खर, पोखर, रक्ष - रक्ख, रख, बुभुक्षा - बुहुक्खा, भूख, प्रत्यक्ष - पच्चक्ख, भिक्षा - भिक्खा, भीख कुक्षि - कुक्खि, कोख, सध्क्ष - सारिक्ख, इक्षु - इक्खु, ईख, ऊख, वृक्ष - रुक्ख, रुख, इत्याद्या बहुशो द्रष्टव्याः।

संस्कृते बहुशः श्रुयमाणानि संयुक्ताक्षराणि कोमलप्रकृतिषु भाषासु विलुप्यन्त एव, स्वापेक्षया पूर्वं च वर्ण दीर्घीकुर्वन्ति - यथा–

अद्य - अज्ज, आज, कार्य - कज्ज, काज, अष्ट - आठ, सप्त - सात, अक्षि - आँख, अग्नि - आग, कृष्ण - कान्ह, कर्ण - कान, पार्श्व - पास, चन्द्र - चन्द्र, चांद, पत्र - पत, पात, चक्र - चक्क, चक्की, नग्न - नग्ग, नंगा, नागा, मौक्तिक - मोत्तिअ, मोती, सपत्नी - सवत्ती, सौत, इत्यादि।

प्राकृतस्य भेदविषये परमाचार्येण भरतेन इदमुक्तं

**मागध्यावन्तिजा प्राच्या शौरसेन्यर्धमागधी**

**बाह्लिका दाक्षिणात्या च सप्त भाषाः प्रकीर्त्तिताः॥ इति।**

(नाट्य शा., १७.४८)

व्यवहारे च ततद्भाषाणा तत्तद्देशेषु वर्णविशेषप्राधान्यमालोच्यत्वेवमुक्तं तेन–

"गङ्गासागरमध्ये तु ये देशाः संप्रकीर्तिताः।
एकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजनात्॥
विन्ध्यसागर मध्ये तु ये देशाः श्रुतिमागताः।
नकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत्॥
सुराष्ट्रावन्तिदेशेषु वेत्रवत्युत्तरेषु च।
ये देशास्तेषु कुर्वीत चकारवहुलामिह॥
हिमवत् सिन्धुसौवीरान् ये जनाः समुपाश्रिताः।
उकारबहुलां तज्ज्ञस्तेषु भाषां प्रयोजयेत्"॥ इत्यादि।

(नाट्य शा. ५७-६०)

अथ प्रकृतिसिद्धादुच्चारणदोषात् तत्रोभयत्रापि अपभ्रंशा आपतन्तिस्म। तदेतदुच्यते – महाभाष्योद्धृतश्रुतिभिः–

"तेऽसुरा हेलयो हेलय इति कुर्वन्तः परा बभूवुस्तस्मादब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छोंहवा एष यदपशब्दः"। इति।

(व्या. महा. पस्पशा.)

विसर्गस्योकारत्वं च पाणिनिः उपाधि विशेष एवानुशास्ति, परं संस्कृत शब्दानामन्तिमो बिसर्ग स्तत्तदुपाधिविरहेऽपि प्राकृत शब्देषु ओकाररूपतां गतो बाहुल्यनोपलभ्यते। यथा–

देवः - देवो, तमः - तमो, गर्तः - गढ्ढो, चन्द्रः - चन्दो, दण्डः - डंडो, चैत्रः - चइत्तो, जीवः - जीओ, पारदः - पारओं (पारा), वृश्चिकः - विच्छुओ, तैलिकः - तैल्लिओ, घोटकः - घोड़ओ, (घोड़ा) इति।

सञ्जीवनी - सुबोधिनी - प्राकृतमञ्जरी - मनोरमा एताः टिकाः अवलम्ब्या व्याकरणनियमेन प्राकृतशब्दानां ससूत्रं साधनमिति अम्बिकानाम्ना नूतनाव्याख्यया अत्यभिनवोऽयं ग्रन्थः प्रस्तुयते।

प्रस्तुतेऽस्मिन् ग्रन्थे प्राकृतप्रकाशस्य प्रथम, द्वितीय अध्याययोः

समस्तसूत्रान्तर्गतोदाहरणानि ससूत्रं साधितानि। सूत्रस्योदाहरणानां साधनादनन्तरम् उपयुक्तस्थले समन्वयोऽपि समीक्षितो यथावसरम्। कतिपयस्थाने उदाहरणानां पुनरुक्तित्वात् साधनप्रक्रिया सकृदेव निर्दिश्यते मुख्यसूत्रप्रसङ्गे।

प्राकृतव्याकरणे विषयोऽयं नवीनः। प्राकृतशब्दस्यार्थः, प्राकृतस्य प्रशस्तिः, प्राकृतस्य प्राचीनाचार्याः, प्राकृतभाषासमूहाः तथैव आसु पारस्परिकाप्रभेदाः, प्राकृतव्याकरणस्य परम्पराः, प्राकृतप्रकाशस्य वैशिष्टयम् चेति विषया ग्रन्थस्य पूर्वार्धे छात्राणां सुबोधनार्थं व्याख्याकृताः।

उत्तरार्धे, प्राकृतप्रकाशस्य भामहं विरचित मनोरमाव्याख्यायां निर्दिष्टानाम् उदाहरणानां ससूत्रं साधनं निर्दिश्यते।

पूर्वसूत्रादनुवृत्तं - सूत्राणाम् संकेतम्, "अम्बिका" व्याख्यायाम् सुस्पष्टं क्रियते। सूत्रस्य निर्दिष्टार्थः "सूत्रार्थः' प्रसङ्गे क्रियते।

प्राकृत उदाहरणात् पूर्वं तत्समसंस्कृतशब्दं निर्दिश्य प्राकृताभिमूखं तीरचिह्नं (>) प्रयुज्यते।

प्रायतः सूत्रार्थे भामहाभिमतं वरीवर्त्तते। आवश्यकस्थले स्वमतमभिनिर्दिष्टम्। भामहेन मान्यः, स्वीकृतो वा सूत्राणाम् क्रम निर्देशोः ग्रन्थे सूचितः। भामहेतर - व्याख्याकारैः निर्दिष्टं सूत्रे द्वे वर्त्तते। तस्मात्कारणात्, परिशिष्टे स्वतन्त्ररूपेण न निर्दिष्टम्। वसन्तराज - सदानन्दाचार्याभ्याम् "ऊदूत उपसर्गे विसर्जनीयेन" प्रथमाध्यायस्य "अष्टादश" सूत्ररूपेण स्वीकृतम्। सूत्रस्यार्थस्तावत् संस्कृत उपसर्गादनन्तरमागतविसर्गेण सह उपसर्गस्य ह्रस्व उ (उत्) कारस्यस्थाने प्राकृते "ऊ" कारः भवति व्यञ्जनवर्णस्योपस्थितौ।

यथा—

दुःशिक्षितम् > दूसिक्खिअं (दुः > दू)

अन्यैः व्याख्याकारैः अस्मात् सूत्रादनन्तरम् "ईदितः" इति स्वीक्रियते। अर्थात् - संस्कृतउपसर्गादनन्तरं विसर्गेण सह उपसर्गस्य आदि "इ" (इत्) कारस्य स्थाने प्राकृते ई (ईत्) भवति व्यञ्जनवर्णस्योपस्थितौ।

यथा—

निःसङ्ग > णीसङ्गो (निः > णी)

ग्रन्थस्यान्तिमभागे परिशिष्टानि निर्दिश्यन्ते। परिशिष्टे कतिपयानि प्राकृतशब्दरूपाणि धातुरूपाणि, प्राकृतधात्वादेशः, प्राकृतप्रकाशस्य प्रथम-द्वितीयाध्याययोः भामहानुमोदित—सूत्राणामकारादिक्रमः तथा च 'मनोरमा', 'अम्बिका' व्याख्ययोः समागत प्राकृतशब्दानां प्रयोगस्य सूची संस्कृतशब्देनसह अकारादिक्रमेण प्रदत्ता।

प्रथमसंस्करण सर्वथा सर्वोपयोगी कर्त्तुं प्रयासः कृता। "प्राकृतप्रकाश" स्य वाराणसेय संस्कृत विश्वविद्यालय संस्करणस्य भूमिका (आ. बलदेव उपाध्याय) चौखम्बा विद्याभवन वाराणसेय संस्करण पं. रामाधिन चतुर्वेदी महोदयस्य "संस्कृतभाषाविज्ञानम्", साहित्यभण्डार, मेरठ द्वारा प्रकाशितं डॉ. श्रीकान्त पाण्डेयेन रचितस्य 'प्राकृतप्रकाशस्य', "दीप्ति" व्याख्या, "प्राकृत भाषाओ का व्याकरण" (प्राकृत भाषायाः महानाधुनिको विद्वान् रिचर्ड पिशल महोदयस्य विश्व प्रसिद्धः जर्मन ग्रन्थः "ग्रामाटिक डेस् प्राकृत स्प्रेखन" इत्यस्य डा. हेमचन्द्र जोशी कृत हिन्दी रूपान्तर) ग्रन्थस्य भूयानुपयोगः कृतः।

अत्र च निवन्धनिष्पत्तौ येषां मुनीनां वैयाकरणानां ग्रन्थानाम्, व्याकरणविदुषां च साक्षात् परम्परया साहाय्यं समुपलब्धं तदर्थे तेषां कृतज्ञाऽहम्।

शब्दसूची (परिशिष्टं ५) संगठने व्याकरण सम्मानस्य छात्रः श्री शिवप्रसाद नन्दस्य साहाय्यार्थे कृतज्ञाऽहम्।

ब्रह्मपुर पौर पुस्तकालयस्य श्री तारिणी चरण सावतः, दिल्ली विश्वविद्यालयस्य पुस्तकालय विज्ञान (Library Science) विभागस्य शोधछात्रः डॉ. अरुण कुमारः इति एतयोः वन्ध्वोसाहाय्यार्थं तथा प्रेरणार्थञ्च कृतज्ञाऽहम्। शिमला विश्वविद्यालयस्य (Simla University) संस्कृत विभागाध्यक्षाणां डॉ. राजेन्द्र मिश्र तथा च केन्द्रिय शिक्षा मन्त्रालये सहायक शिक्षा सलाहकारः (संस्कृतं) डॉ. दयानन्द मिश्र महाभागानाम् उत्साह प्रेरणार्थे चिरकृतज्ञाऽहम्।

आधुनिकयुगे प्राकृतप्रवाहस्य उत्सः, स्रोत स्वरूपः कुन्दकुन्द भारत्याः महाराजः आचार्यः श्री श्री विद्यानन्द मुनिनामाशीर्वादया ग्रन्थोऽयं समापनकर्त्तुं समर्थाऽस्मि। न तु केवलंग्रन्थसमापितुं, परन्तु प्राकृतभाषां प्रति आकृष्टाऽहं प्राकृतसाहित्योपरि ग्रन्थरचयितुं स्थिरनिश्चयी कृता।

दिल्ली नगरस्यशक्तिनगरस्थ "प्रतिभा प्रकाशनस्य सुप्रसिद्धः प्रकाशकः संस्कृत-संस्कृतेः मूर्त्तिमन्तः प्रतीकभूतः श्रीमान् राधेश्याम शुक्लोऽपि, धन्यवादार्हः ग्रन्थस्यास्य सुरुचिपूर्ण प्रकाशनार्थम्।

ग्रन्थेऽस्मिन् सम्भवत्रुटिनां सम्मार्जनार्थं विद्वद्भिः प्रदत्ता निर्देशा लेखिकया सधन्यवाद गृह्यते ग्रहीष्यन्ते च। यदि अनेन सारस्वतश्रमेण विदुषां परितोषो जायते। तर्हि स एव भविष्यति सुमहान् पुरस्कारं इतिमात्रं विनिवेद्य विरमते लेखिका।

विद्वद्वंशवदा
अञ्जलिः
(सलिला नायक)

**दुर्गाष्टमी**
दिनांक : १९.१०.९६

# सङ्केत परिचयः

| | | |
|---|---|---|
| अमर को. | – | अमरकोषः |
| ऋग्. | – | ऋग्वेदः |
| काव्याद. | – | काव्यादर्शः |
| गो. ब्रा. | – | गोपथ ब्राह्मणम् |
| छान्दो. उप. | – | छान्दोग्योपनिषत् |
| जैमिनी. उप. | – | जैमिनीयोपनिषत् |
| ताण्ड्य महा ब्रा. | – | ताण्ड्य महाब्राह्मणम् |
| तैत्ति. ब्रा. | – | तैत्तिरीय ब्राह्मणम् |
| नाट्य शा. | – | नाट्यशास्त्रम् |
| निरु. | – | निरुक्तम् |
| पात. सू. | – | पातञ्जलसूत्रम् |
| पा. शि. | – | पाणिनीय शिक्षा |
| पा. सू. | – | पाणिनीयसूत्रम् |
| बृह. उप. | – | बृहदारण्यकोपनिषत् |
| मनु. | – | मनुस्मृतिः |
| म. भा. आदि. | – | महाभारत आदि पर्व |
| ल. कौ. | – | लघुसिद्धान्तकौमुदी |
| वाक्य. | – | वाक्यपदीयम् |
| वा. रा. सु. | – | वाल्मीकीयरामायणसुन्दरकाण्डम् |
| वै. भू. का. | – | वैयाकरणभूषणसार-कारिका |
| व्या. महा. | – | व्याकरणमहाभाष्यम् |
| शत. ब्रा. | – | शतपथब्राह्मणम् |
| शिव पु. | – | शिवपुराणम् |
| सि. कौ. सू. | – | सिद्धान्तकौमुदीसूत्रम् |

# विषय-सूची

# प्राकृत शब्दस्यार्थः

सर्वे प्राकृताः शब्दाः स्वकीयान् व्यापक अर्थान् गृहीत्वा संस्कृतं विना अन्यासु सर्वासु प्रान्तीय - भारतीय - प्राचीन - भाषासु सम्यक् भावेन प्रयुज्यन्ते, मध्यकालीनासु ऐतिहासिकाषु भाषासु तथैव प्रयुज्यन्ते अपि एतत् परिदृश्यते। एषु प्राकृतिकेषु शब्देषु प्रथम शतक्याः प्रारभ्य पञ्चम शताब्दीं यावत् लोकप्रचलितासु भाषासु अपितु लोक साहित्येषु सम्यक् भावेन समुचितान् अर्थान् प्रकाश्यन्ते। अनन्तरं इमे सर्वे प्राकृताः शब्दाः लोक प्रचलित स्वरूपेण प्ररुढ़ाः विद्वद्भिः उपस्थाप्यन्ते। अयं प्रश्नः स्वतः सम्भवति स्वाभाविकेन रूपेण यथा मध्यकालीनेषु ऐतिहासिकेषु अब्देषु कथं वा इमे प्राकृताः शब्दाः सर्वासु भारतीयेषु लोक भाषासु सम्मिलन्ति। द्वितीयः प्रश्नः अस्यापि प्राकृतिक शब्दस्य कः मूलार्थः। एवं भूतान् प्रश्नान् अनेके विद्वांसः उत्थापयन्ति, अस्य प्रश्नस्य उत्तरं सर्वे विद्वांसः यथा प्राचीनाः जीनाः, वौद्धाः, अर्वाचीनाः अपि वैयाकरणाः सम्यक् स्वरेण "प्रकृतिः" इति एकवाक्येन प्रयच्छन्ति। अयं शब्दः प्राकृतः संस्कृतस्य प्रकृति शब्दात् निष्पन्नः इत्थं प्रतिपाद्यते। येषां प्राकृतशब्दानाम् अर्थाः लौकिकैः ग्रामनगरपुरजनैः सरलभावेन सुबोध्याः – सुवक्तव्याः अपितु इयं प्राकृतिकी भाषा या अपि प्रकृति स्वरूपा कथ्यते इयं पुनः किंभूता। अयं अपि अपरः प्रश्नः उत्थाप्यते विद्वद्भिः। अतः सर्वेषु विद्वत्सु अपि द्वौ विभागौ स्पष्टतया अजायताम्।

प्रथम पक्ष विद्वांसः प्रकृतिः इति संस्कृत शब्दात् प्राकृतस्य शब्दस्य जन्मः अतः अयं तत् भवः इति कथ्यते। अनेन कारणेन प्राकृतः शब्दः. तत् जातः इति कथ्यते। पक्ष सम्पर्कनाय कतिपयाः विद्वांसः संस्कृत शब्दात् हेमचन्द्र "प्राकृत व्याकरणात्"[१], त्रिविक्रम विरचितात् "प्राकृतव्याकरण वृत्तेः"[२], मार्कण्डेय कविन्द्र विरचितात् "प्राकृत सर्वस्व"[३] ग्रन्थात्, धनिकस्य "दशरूपकावलोक"[४] ग्रन्थात्, सिंहदेवगणिनः "वाग्भटालङ्कार" टिका ग्रन्थात्[५], वासुदेवस्य "कर्पूर मञ्जरी" सट्टकस्य सञ्जीवनी टीकायाः[६] उद्धृतिः समुस्थाप्यते।

अन्य पक्षियाः विद्वांसः येषु केचित् जैनाः, केचन पाश्चात्याः अपि प्रकृति शब्दात् एवं भूतम् अर्थं प्रतिपादयन्ति। यथा व्याकरणादीनां शब्द शास्त्राणां संस्कारं विना इमे प्राकृताः शब्दाः लोक मुखेभ्यः सहजरूपेण प्राकृतिकेन उपायेन समुत्च्चार्यन्ते। अनेन कारणेन इमे प्रतिपादयन्ति प्रकृति रूपायां भाषायां व्यवहृताः शब्दाः प्राकृताः। इयं प्राकृत भाषा यदा व्याकरणादिभिः संस्कारभूतैः शास्त्रैः सुष्ठु संस्कृताः सुविकशिताः अभवन्, तान् शब्दान् संस्कृतम् इति उचूः ते विद्वांसः।

अतः संस्कृतभाषायाः इयं प्राकृत भाषा प्राचीनतमा इति विचार्य कतिपय विद्वांसः प्राकृतशब्दस्य एवंभूतं निर्वचनं निरुपितवन्तः। यथा प्राक् + कृतम् < प्राकृतम्। अस्य पक्षस्य सुनिष्पादितमिदं पक्षम् रुद्रटस्य जैन टिकाकारः नमि साधूः इति नामधेयः विद्वान्, अधिक स्पष्टतया बोधयति स्म। रुद्रटेन विरचितस्य काव्यालंकारस्य प्राचीना टीका अनेकानेक पक्ष प्रश्नान् समाधयति। अस्याः टीकायाः निर्णीतं सूक्ष्मातिसूक्ष्म सारं निर्णयानेन सर्वे प्राच्याः पाश्चात्याः विद्वांसः मानयन्ति वहुमन्यन्ते च। अतः एवंभूतः विचारः कियत्दूरं विस्तीर्य्य इदानीमपि द्वितीय मतविचारं समारभे। निष्पत्तिरूपेण इदमपि समुच्यते नेमि साधोः उच्चारणात् स्पष्टभावेन तस्य महोदयस्य भाषा विशेषान् प्रति धार्मिकतां महतां विश्लेषणार्थातिशयं परिगृह्य अधुनांतनानाम् प्रचलितानाम् प्राकृतानाम् संस्कृतानाम् शब्दानाम् व्यवहारिकः अर्थः सुनिरुपितः यत् यावदर्धमागधी वाणी इति उक्तेः सर्वस्य संसारस्य सर्वेषां जनानाम् सहजरूपेण स्वाभाविकेन भावेन सर्वासां भाषाणाम् मूल भाषेयं इति

प्रश्नः समुत्पद्यते तस्य उत्तरमार्गेण उच्यते। साम्प्रतिकाः वैज्ञानिकाः मानवाः एवंभूताः प्राचीनतमा भाषा मानयितुं नाग्रे गच्छन्ति। अर्धमागधी भाषायाः सञ्जायते प्राकृत भाषा इति एषां न सम्मतम्। प्राकृतभाषा तथा संस्कृतभाषायाः तुलनात्मक अध्ययनेन इदं सुस्पष्टं जायते यत्, संस्कृतस्य अत्याधुनिकतम स्वरूपं प्राकृत भाषायाः प्राचीनतमात् स्वरूपात् प्रायशः समधिकं पुरातनं भवति, येन इयं सम्भावना सम्भाव्यते यत् प्राकृत भाषायाः शुद्धं विकशितं रूपं हि संस्कृतम्। तस्मात् कथ्यते प्राकृतभाषां संस्कृतस्य जन्मदात्री एव। अनेनमार्गेण विचारशीलाः कतिपयाः पाश्चात्य भाषाविदः तथा प्राच्याः वैदिकाः विद्वांसः कतिपयैः प्राकृतैः शब्दैः इदं निष्कर्षं समुपस्थापयन्ति यत् वेद भाषायाः उपरि प्राकृतस्य प्रभावः सुस्पष्टः। अस्मात् कारणात् एषां विदूषां अभिज्ञता, अनभिज्ञता अपि प्रतीयेते। अस्मिन् विषये कश्चित् सन्देहः अपि न वर्त्तते, वेद भाषायाः प्रचलन समये अनेकानेकाः लौकिक भाषा अवश्यमेव सम्भवेयुः। अनयोः वेद प्राकृतयोः सम्बन्धः सुप्रतिण्ठितः। तथापि अस्मिन् प्रबन्धे अयम् अपि अवधारणीयः विषयः यत् वैदिक भाषायाः उपरि प्राकृतस्य प्रभावः सम्यक् संद्यश्यते।

अनेन कारणेन तात्कालीक भाषा समान्य तत्त्वं सर्वैः विद्वद्भिः स्वीक्रियते अस्मिन् प्रश्ने ते अपि सन्दिग्धाः स्युः। कथं प्राकृत भाषायाः साहाय्येन वैदिकभाषायाः समुन्नतिं स्यात् अथवा वैदिक संस्कृतं परिगृह्य लौकिक संस्कृतस्य साहाय्येन प्राकृतस्य समुन्नतिः स्यात् इति विचारणा अनेकेषां सन्देहं समुत्पादयन्ति। इदम् एव सत्यं प्राकृत भाषा विज्ञानात् ज्ञायते यथा तात्कालीके समये उत्तरभारतीयाः समस्ताः आर्यभाषाः प्राकृतभाषया सह समुल्लसिताः अभवन्। इदं तत्त्वं लौकिक संस्कृत भाषा विश्लेषणात् अध्ययनात् च सम्यक् परिदृश्यते ज्ञायते च।

अनेन कारणेन अस्य विचारस्य आधार उपरि च स्वीक्रियते सम्यक् यत् संस्कृतस्य उपरि प्राकृतस्य प्रभावः सुस्पष्टः अथवा प्राकृतस्य उपरि संस्कृतस्य प्रभावः समुल्लसितः इति विचारणा सम्यक् प्रवर्त्तते। यद्यपि प्रकृतिस्वरूपा प्राकृतभाषा संस्कृतभाषायाः जननी कदाचित् कैः विद्वद्भिः स्वीक्रियते कुत्रापि संस्कृतभाषा प्राकृत भाषायाः जन्मदात्री

केचन अनुमन्यन्ते। यतः साम्प्रतिकः भाषा वैज्ञानिकाः सिद्धान्तं समुत्पातयन्ति काचित् महतीभाषा कस्मिन् अपि देशे समय सूत्रं परिगृह्य लोक प्रचलिता भाषा भवेदिति अनिवार्य विषयः। अस्याम् आलोचनायां का कस्याः जननी कस्याः भाषायाः का भाषा सञ्जायते तदपि विश्लेषणस्य विषयः। अयमपि प्रश्नः स्वयं उत्तिष्ठति प्रकृति सिद्धः प्राकृत शब्दः अथवा प्रकृति स्वरूपा इयं संस्कृत भाषा कदा सञ्जयतेः।

तदैव का कस्याः जननी इत्यपि सम्यक् सुविचारणीया। स्थूलतः विद्वद्भिः अनुमीयते प्राचीनतमा इयं प्राकृत भाषा संस्कृतभाषायाः इति निष्कर्षः। इयं प्राकृतभाषा लोक साधारणी भवति यतः जनता जनार्दनस्य कथितभाषा रूपेण अस्य स्थितित्वं कालिदासादिभिः महाकविभिः तेषां श्रव्य काव्येषु परिदर्शयन्ति। यथा भाषया सर्वे सर्वेषां भाव प्रकाशनं कुर्वन्ति, लिखन्ति च, तामपि भाषाम् लोकभाषेति कथ्यते। अपरेऽस्मिन् पक्षे भावभाषायाः विभागः परिदृश्यते, यथा शासकानां शासनकार्यं प्रचलति इमां शिष्टजन भाषा इत्यपि कथ्यते। अनया आलोचनया अयं निष्कर्षः प्रतिपन्तः एका लोकभाषा अपरा शिष्टभाषा वा राजभाषा भवति। अयमपि विचार्यः विषयः यत् इयमपि शिष्ट भाषा प्रचलित समये कदाचित् वहूनां जनानां कथित भाषा महत्त्वम् उपलभ्यते। यतः शिष्टानां समादरः देशस्योपरिं सर्वत्र सम्यक् भावेन सर्वदैव अधिकारं विस्तारयति। अस्मात् कारणादियं यथार्थता समुत्पद्यते शिष्टजनानां विदूषां समादर फलेन अस्माकमियं संस्कृतभाषा समधिक समादृता भवेदिति सम्भावना। संस्कृत शब्दस्य अर्थः शुद्धः। यस्मात् शुद्ध स्वभावादियमस्माकं संस्कृतभाषा कदासीत् समादृता। तदैव आदिकविना महाकविना वाल्मीकिना अपि प्राकृतं भाषा विकल्पं समाश्रित्य तस्याः अपि प्रशंसा सम्यक् दीयते स्म। यथा– "यदि वाचं प्रदास्यामि द्विजातिः इति संस्कृताम्"[७], इत्यनेन वचनेन प्राकृत प्रयोगस्य महनता सुस्पष्टा। एभिः प्राचीनतमैः महाकवीनां वचनैः स्पष्टतया उपस्थाप्यते इयं संस्कृतभाषा द्विजातीनां प्रिय परिजनासीत्।

सर्वे शिष्टाः विद्वांसः प्राकृत भाषामपि व्यवह्रियन्ते स्म। समाजेऽस्मिन् शिष्ट जनेतरः लोकानां कथितां भाषां म्लेच्छ भाषां इति विविधेषु शास्त्रेषु निगद्यते। इमं सम्वन्धमवलम्व्य कतिचित् उदाहरणानि

अपि प्रदेयानि तद् यथा– इमां प्राकृतभाषां "म्लेच्छभाषा" इति वैदिक साहित्येषु[८], तथैव महाभाष्ये[९] अपि इदृशं व्यवहारम् "अपभ्रंश" इति कथ्यते। सर्वातौ आशास्यते नाट्यशास्त्रेषु[१०] इमां भाषां प्राकृत-भाषा इति भास कालिदासादिभिः प्रयुज्यते स्म। यद्यपि प्राकृतशब्दादिदं तत्त्वं सत्यं भवेत्, तदेयं प्राकृतभाषा संस्कृत भाषायाः अतीव प्राचीनतमेति निष्कर्षः।

भाषायाः स्वरूपं सर्वादिमकालात् सुसंगठितं, सुसंस्कृतं सुसंस्कारयुक्तं नासीदिति सर्वैः स्वीक्रियते। अतः लोककथितां भाषां प्राकृतभाषेति कथनेन न काचित् हानिः। इदानीमप्यनेनकारणेन शिष्टेतरैः साधारणजनैः व्यवहृता भाषा प्राकृतभाषारूपेण प्रयुज्यते, तद यथा दशरूपकावलोके–

**"अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो।**
**युक्तायुक्त विवेकशून्यहृदयो धन्यो जनः प्राकृतः॥"[११]**

कादम्बर्यामपि एतादृशः संलापः कपिञ्जलेन पुण्डरिकः संबोध्यते यत् – "किं यः कश्चन प्राकृत इव परिभयमानमात्मानं न रूणत्सि"।[१२] महाकविना तुलसीदासेनोप्ययंभावः[१३] समर्थ्यते रामचरितमानसे।

इदमप्यनुमीयते यत् प्राकृताकानां जनानां समुच्चारितेयं प्राकृत-भाषा। अतः तेषां स्वाभाविक प्रवृत्ति संजातेयं भाषेति प्रतिपद्यते। महाकविना अमरसिंहेन तदपि स्वीक्रियते अमरकोषाख्ये[१४] शब्दशास्त्रे। तत्कालीनाः संस्कृत विद्वांसः अर्धमागध्यादीः भाषाः प्राकृतनाम्ना आभिहतवन्तः।[१५]

इत्यनेन मार्गेण प्रतिपद्यते यत् प्राकृत शब्दानां संवन्धः प्रकृत्यासाकं संवन्ध्यते इत्यपि सत्यम्। तथाप्यस्याः भाषायाः प्रकृतिः एवंभूता नासीत् यस्याः भाषायाः अन्याः संस्कृतादयः समधिकाः भाषाः समुत्पद्यन्ते।

तथापीदं विद्वद्भिः स्वीक्रियते इयं प्राकृतभाषा सर्वाभ्यः भाषाभ्यः सम्यक् सुप्राचीनाः एव। वाचनिकतुलनाद्वारेण एतदपि परिष्क्रियते यत्, संस्कृतालंकारिक काव्य नाटकेषु वहुविधा शब्दानां क्रियाव्ययादीनां प्रयोगः पुष्कलः दृश्यते, प्राकृतेऽपि न तद्वत् परिलक्षते। इदं सर्व विहाय ध्वनिपरिवर्त्तनस्य फल स्वरूपेण शब्दानामाकृतिष्वपि च

व्यापक परिवर्त्तनं संदृश्यते। संस्कृतस्य संतुलनमवलम्व्य प्राकृत भाषायामन्यभाषणां प्रभावानपि प्रचुर रूपेणोपलभ्यतेति सत्यम्।

इमाः सर्वा उक्तयः इदं सत्यं स्थूलतः सन्मार्गेणोपस्थापयति यत् संस्कृतमेव प्राकृतभाषायाः मूलभूता जन्मदात्री।

प्रायशः अनेन कारणेन सर्वे प्राचीनाः अर्वाचीनाश्च प्राच्याः प्रतीच्याः अपि प्राकृत व्याकरणं संस्कृत व्याकरण रचनायां मूलभूतं विचार्य प्राकृतस्य विश्लेषणं कृतवन्तः। अनेन पथा संस्कृतस्य प्रकृतित्वमतीव सुस्पष्टमेवाकलनीयम्। तथापि वैदिक लौकिक संस्कृतमेव प्राकृतस्य मूलभूता प्रकृत्येति न विविच्यते 'यतः—प्राकृतभाषायामेतादृशं तत्त्वमुपलभ्यते यस्य विकशितं स्वरूपं शुद्ध संस्कृतात् भवतीति नोपलभ्यते। इदमप्यस्माभिः परिलक्षते यत् तदानींतनेकाले वैदिक लौकिक संस्कृतमपि प्रचलितासु लोकभाषासु सातिरिक्तं भिन्नतममासीत्।

वैदिकसंस्कृतस्य तथा लौकिक संस्कृतस्य आदिभूमौ प्राकृतस्य आदिमतासीत् सत्यमेव। तथापीदं स्वीकरणीयमेव इमाः सर्वाः भाषा वैदिक लौकिक संस्कृतादारभ्य अन्याश्चापि वर्त्तमानाः आसन्। इत्यत्रापि परितापस्य विषयः अयमेव अन्यासां लोकभाषाणाम् वहुलं काव्यनाटकोपन्यास रचनाभावात् आसामस्तित्वं न सम्यक् रूपेण परिलक्षते।

प्राकृतभाषायाः अनेकानेकरूपाणि सन्ति सत्यमेव तथाप्येदं तथ्यं पुष्टतां परिगृह्णाति यत् अस्याः प्राकृतभाषायाः कयापि एकतमया भाषया विकाशः नाभवन्नपि अनेकानेक भाषाभिः संभवेदिति विचारणीयमेव।

यद्यपि प्राकृतभाषायाः प्रकृतिस्वरूपां इमां भाषां प्रतिरूपेण संस्कृतमभिमन्येत, तदपि संस्कृतस्य प्रकृति स्वरूपं प्राकृतं भवतीति अधिकाधिके विद्वद्भिः अवश्यमेव स्वीकरणीयम्।

# संदर्भ सूची

१. प्रकृतिः संस्कृतम् तत्र भवं तत आगतं वा प्राकृतम्'' (१.१०)

२. ''प्रकृतेः संस्कृतात् साध्यमानात् सिद्धाच्च यो भवेत्।
प्राकृतस्यास्य लक्षानुरोधि लक्ष्म प्रचक्ष्महे॥''

३. ''प्रकृतिः संस्कृतं तत्र भवं प्राकृतमुच्यते''

४. ''प्रकुतेरागतं प्राकृतम्, प्रकृतिः संस्कृतम्'' (२.६०)

५. ''प्रकृतेः संस्कृताद् आगतं प्राकृतम्'' (२.२)

६. ''प्राकृतस्य तु सर्वमेव संस्कृतं योनिः।'' (९.२)

७. ''यदि वाचं प्रदास्यामि द्विजारिव संस्कृताम्।
रावण मन्यमाना मां सीता भीता भविष्यति॥''

८. द्रष्टव्य, शतपथ ब्राह्मण'' (४.२.१.१४)

९. (क) ''एकैकस्य शब्दस्य वहवोऽपभ्रंशाः''। महाभाष्य, पस्पशाह्निकः।
(ख) तेऽसुरा हेलयो हेलय इति कुर्वन्तः परावभवुः। तस्माद ब्राह्मणेन न म्लेच्छितवै नापभाषितवै। म्लेच्छो ह वा ऐष यदपशब्दः।
(महाभाष्य, पस्पशाहिनके)

१०. ''एतदेव विपर्यस्तं संस्कारगुणवर्जितम्
विज्ञेयं प्राकृतं पाठयं नानावस्थान्तरात्मकम्'' (नाट्यशास्त्र)

११. ''दशरूपकावलोक : (३.२)

१२. कादम्वरी

१३. किन्हें प्राकृत जन गुणगाना।
सिरधनि गिरा लागि पछताना॥ (रामचरितमानस)

१४. ''प्रकृतिः स्यात् सन्ततौ जने'', (अमरकोष)

१५. अर्धमागधी जैनभाषायाः वरिष्ठमूलभूतेति स्वीक्रियते।

(प्राकृतप्रकाशः पृ. ८)

# प्राकृतस्यप्रशस्तिः

प्राकृत भाषायाः मधुरिमा सर्वविदितम्। संयुक्त वर्णानाम् अभावः नास्ति, परन्तु शब्दस्य मोदकतया तथा वर्ण विषयस्य स्वाभाविकेन रसिकाः प्राकृतभाषां प्रति आकृष्टाः। अतः प्राकृतस्य प्रशस्तिरनेकैः विद्वद्भिः अनेनप्रकारेणकृता–

हाल–"गाथा–सप्तशती"

"अमियं पाइयकव्वं पढिउँ सोउं च जे न जाणंति।
कामस्स तत्ततत्तिं कुणंति ते कहँ ण लज्जंति।।

छाया

"अमृतं प्राकृतकाव्यं पठितुं श्रोतुं च ये न जानन्ति।
कामस्य तत्वचिन्तां कुर्वन्ति ते कथं न लज्जन्ते।।

वररुचिः – "प्राकृतमञ्जरी"

प्रसीदस्तु च वाचस्ता यासां माधुर्यमुच्छ्रितम्।
प्राकृतच्छद्मना चक्रे कात्यायनमहाकविः।।
अहो तत् प्राकृतं हारि प्रिया वक्त्रेन्दुसुन्दरम्।
सूक्तयो यत्र राजन्ते सुधानिष्यन्दनिर्भराः।।

राजशेखर-"कर्पूरमञ्जरी"

परुसो सक्कयंबधो पाइयबंधो वि होई सुउमारो।
पुरिसाणं महिलाणं जेत्तियमिहंतरं तेत्तिअमिमाणम्॥

जयवल्लभ कविः

पाइअ कव्वुल्लावे पड़िवअणं सक्कएण जोदेई।
सो कुसुमसत्थरं पत्थरेण अवुहो विणासेइ॥
(प्राकृतकाव्योल्लापे प्रतिवचनं संस्कृतेन यो ददाति।
स कुसुमप्रस्तरं प्रस्तरेण अबुधो विनाशयति॥)
ललिए महुरक्खरए जुवईजणवल्लहे ससिंगारे।
सन्ते पाइअकब्वे को सक्कह सक्कअं पड़िउँ॥
(ललिते मधुराक्षरके युवतिजनवल्लभे संशृंगारे।
सति प्राकृत काव्ये कः शक्नोति संस्कृतं पठितुम्।)

त्रिविक्रमदेवः - प्राकृतवृत्ति

"अनल्यार्थसुखोच्चार शब्दः
साहित्यजीवितम्।
स च प्राकृतमेवेति मतं
सूक्तानुवर्त्तिनाम्॥

वाक्पतिराजः - गउड़वहो

णवमत्थ दंसणं संनिवेससिसिराओ वंधरिद्दीओ।
अविरलमिणमो आभुवनवंधमिह णवर पअअम्मि॥
(नवमर्थ दर्शनं सन्निवेशशिशिश वन्धर्द्धयः।
अविरलमेतदाभुवनबन्धमिह केवलं प्राकृते॥ )

महेश्वरसूरिः - पञ्चमीमाहात्म्यम्

"गूढत्थदेसिरहिअं सुललिअवण्णेहिं विरइअंरम्मं

पाइयकब्वं लोए कस्स ण हिअअं सुहावेइ॥
(गूढार्थदेशरहितं सुललितवर्णैर्विरचितं रम्यम्।
प्राकृतेकाव्यं लोके कस्य न हृदयं सुखयति॥)

# प्राकृतस्य प्राचीनाचार्याः

"प्राकृत कल्पतरु" तथा "प्राकृत सर्वस्व" ग्रन्थयोः प्राकृतस्य प्राचीनाचार्याणाम्, अज्ञात अल्पज्ञात च आचार्याणाम् मतानाम् परिचयः लभ्यते।

## (१) अनिरुद्ध भट्टः

आचार्य मार्कण्डेयस्य अनुसारेण "दाक्षिणात्या" इत्यस्य लक्षणं उदाहरणं कुत्रापि न उपलभ्यते। अस्मिन् प्रसङ्गे "अनिरुद्ध भट्ट" स्य दाक्षिणात्य काव्यस्य लक्षणमनेन प्रकारेण उद्धृतम्–

**"दाक्षिणात्यपदालम्वि संस्कृताङ्ग विजृम्भितम्**
**काव्यं पीयूषनिष्यन्दि दाक्षिणात्यमितीरितम्॥"**

## (२) कपिलः

मार्कण्डेय आचार्येण उक्तं "ग्रह" धातुः सर्वत्र शौरसेनी प्राकृते "गेण्ह" रूपे परिवर्त्तते, परन्तु कपिलस्य मतेन "क्त", "क्तवतु" तथा "तव्य" प्रत्यानाम् योगेन "गेण्ह" न आदिश्यते (पृ. ९४) फलतः "गेण्हिदं" इति स्थाने "गहिदं" तथा "गेण्डिदव्वं स्थाने "गहिदव्वं" भवति।

## (३) कोहलः

"मागधी" प्राकृतस्य नाटकीय प्रयोगे अस्य मतमुल्लिखितम् (पृ.

१०१)। "राक्षस-भिक्षु-क्षपणक-चेटाद्या मागधी प्राहः" इति कोहलः। सम्भवतः वचनमस्य नाटयशास्त्रीय ग्रन्थात् उद्धृतम्। यत्र भरतमुनेः सदृशं तेनाऽपि प्राकृतभाषायाः विवरणमुपन्यस्तम्।

## (४) शाकल्यः

(क) शौरसेनी प्राकृते 'भू' धातौ "भो" इति आदिश्यते (मार्कण्डेय), परन्तु शाकल्यस्य मतेन "हो" इति आदिश्यते। फलतः "होदि" इति रूपं सिद्धम्।

(ख) प्राकृत कल्पतरुग्रन्थे (पृ. १८) शाकल्यस्य मतमिदंप्रकारेण निर्दिष्टम्—

**"अता सणेहो - वि इता सिणेहो**
**पक्खे विणेहो चिह्न होन्ति चिण्हं**
**अता सणाणं पि इता सिणाणं**
**ण्हाणं पि साकल्लमतं वितिण्णं**

शाकल्यस्य मतेन "स्नेह" तथा "स्नान" शब्दः अनेन प्रकारेण परिवर्त्तते यथा—

सिणेहो, सणाणं।
सिणेहो, सिणाणं।
णेहो, ण्हाणं।

## (५) माण्डव्यः

"प्राकृतकल्पतरु" ग्रन्थे शाकल्येन सह 'माण्डव्य' स्य नामोल्लेखं लभ्यते।

(क) प्राकृते स्वार्थ प्रत्ययानाम् विधानावसरे अस्य मतस्य निर्देशेन (पृ. २४) स्वार्थे "ह" प्रत्ययः भवति।

पुत्र एव = पुत्तहो।

(ख) इमौ आचार्यो द्वौ "क्त्वा" स्थाने "तु" प्रत्ययस्य प्रयोगं स्वीकुरुतः। (प्राकृत कल्पतरु पृ. २५) यथा "दट्ठुं खणं ने णऊणं फलिल्लं" अत्र "दट्ठूं" इत्यस्य अर्थं तु "दृष्ट्वा"

## (६) हरिश्चन्द्रः

"प्राकृतसर्वस्व" ग्रन्थानुसारेण (पृ. ११०) संस्कृत तथा शौरसेनी प्राकृतस्य अन्योन्यमिश्रण "टाक्की" भाषा रूपेण परिचिता। "टाक्की" विभाषायाः एकः भेदः। किन्तु हरिश्चन्द्रस्य मतेन "टाक्की" तु न प्राकृतमपभ्रंशमेव। अस्य अपभ्रंशस्य प्रयोगः विद्वद्भिः नाटके प्रयुज्यते–

**"हरिश्चन्द्रस्त्विमां भाषामपभ्रंश इतीच्छति**
**अपभ्रंशो हि विद्वद्भिर्नाटकादौ प्रयुज्यते॥**

अनेनमतेन इदमेव प्रतितीः भवति - टाक्की भाषायां प्रथमा विभक्तौ "उ" प्रत्ययस्य संयोगः भवति विकल्पेन (उत् स्यात् पदान्ते वहुलम्)। वैशिष्ट्यमस्य अत्रापभ्रंश भाषायामुपलभ्यते।

# प्रमुख प्राकृतभाषा समूहाः तथैव आसु पारस्परिका प्रभेदाश्च

यथा उपर्युक्त मार्गेण सम्यक् परिष्कृतम् मतम् अस्माभिः सुष्ठु प्रवर्त्ततेऽत्र भारतीयासु सर्वासु मध्यकालोनासु आर्यभाषासु भाषोपभाषासु अस्याः प्राकृत भाषायाः प्रभावः एवंभूतः, येनेयं भाषा सर्वाः आत्मनः आत्मतुल्याः आक्रोड़यत्याकलयति च। यथा खीष्टपूर्वात् पञ्चम शतकात् दशमशतकं यावत् पञ्चदशशतक विशालकालावधौ बहु- विधमाकारमा- कृतिं परिगृह्य सर्वेषु देशेषु प्रचरिता प्रसरिता परिव्याप्ताचासीत्। अपरं तु यस्याः प्राकृत भाषायाः पूर्वावस्था "पाली" स्वरूपेण परिदृश्यते अपरावस्था प्राकृत स्वरूपेति।

अस्याः प्राकृतभाषायाः प्रचलित व्यवहारेण कदाचित् संकुचितः कदाचिदपिसुविस्तृतार्थः शतक त्रयात् पञ्चशतकं यावत् भृशं संदृश्यते। इत्यत्राप्येवं रूपेण परिगृह्यते यदस्माभिः यथैव स्वकीयां भाषां व्यवहरामः स्थूलतः तदानीन्तनायाः प्राकृतभाषायाः व्यवहारः तेनैवासीदिति सारार्थः। इत्यालोचनायां भूमौ कतिचिदपि भाषाः स्युः यासु वैयाकरणाः सममतावलम्बिनः न भवन्ति। सर्वेषु वैयाकरणेषु वरिष्ठेषु वैयाकरणेन वररुचिना, महाराष्ट्री, शौरसेनी, मागधी, पैशाचिकी रूपेण केवलं चतसृणां प्राकृतिक भाषाणां मान्यताम् संगृहयते।

उपर्युक्ताभ्यः चतुः प्राकृतिक भाषाभ्यः सातिरिक्ताः, आर्षप्राकृत,

चुलिका पैशाची, अपभ्रंशाः अपि हेमचन्द्रेण मान्यन्ते। अपरं तु अपभ्रंशात् पुनश्चातिस्नः प्राकृतभाषाः संजाताः। एतास्वपि प्राकृतिक भाषासु हेमचन्द्रेण आर्षप्राकृतमप्यर्द्धमागधी इति संगृह्यते। यस्यां जैनधर्मस्य समस्त प्राचीनतमाः आगम वचनानि निबध्यन्ते। यस्य हेमचन्द्रस्य विचार निष्कर्ष "प्राकृतलक्षणस्य" लेखकेन चण्डेन इमामर्द्धमागधी प्राकृतभाषामिति उवाच। चुलिका पैशाची नाम्नावश्यं नविनता विद्यते, तथापि पैशाचिका याः कश्चित् भेदः अवश्यमनुभव्यते एव। पञ्च शतकात् ख्रीष्टाब्दात् अनन्तरमपभ्रंशः इति प्राकृत भाषाभ्यः संजातः समुत्पन्नः वा अनिवार्य सत्यम्।

अनेन प्रकारेण परस्थाः सर्वाः भाषा प्राकृतभाषान्तर्गताः इति कर्त्तुमासीत् समुद्यते हेमचन्द्रः।

आर्षं विना अन्य षट् "षड़भाषाः" इति उच्यते। वाल्मीकिना विरचिते प्राकृतसूत्रे, पुनश्चापि लक्ष्मीधरकृतायां "षड़भाषाचन्द्रिकायामासां सर्वासां भाषाणां सुनिरूपणं क्रियते। पुरुषोत्तमदेवेन स्वकीयप्राकृतानु-शासनेऽपि काश्चिदपराः भाषाः अपि प्राकृत परिधौ एकीकर्त्तुं प्रयत्नः क्रियते स्म।

आसां विभागकरणेन पुनरपि कांचित् नवीनां चिन्तां चकार। तस्यमतानुसारेण सर्वाः प्राकृतभाषाः पञ्चसंख्यकाः। तद्यथा– महाराष्ट्री, शौरसेनी, प्राच्या, आवन्ती, मागध्यश्च। आभ्यः परं कैकेयी, शौरसेनी नामनी द्वे पैशाचिकयौ भाषायाम्, शाकारी, चाण्डाली, शावरी, टक्की नाम्न्यः चतस्रः विभाषाश्चापि, अपितु नागर व्राचड़ौ अपभ्रंशौ अनेन मान्यौ भूयताम्।

बंगप्रसिद्ध वैयाकरणेन रामतर्कवागीशेन स्वकीय पुस्तके प्राकृतकल्पतरौ, पुरुषोत्तमदेव कृतं वर्गीकरणमवलम्ब्य भाषा विभाषा पैशाचिकी भाषासंख्याः संकेतयत्यप्यस्य विचारणायामपि महाराष्ट्री, शौरसेनी, प्राच्यावन्ती वाहिल्की मागध्यर्द्धमागधीदाक्षिणात्याः इमाः अष्टभाषाः, शाकारिकी चाण्डालिका शावर्य। भीरिका टक्की इमाः पञ्च विभाषाः नागर व्राचड़ अपभ्रंशौ कैकेय शौरसेनी पाञ्चाल गौड़-मागध व्राचड़ाः इमाः षट् पैशाच भाषाः अनेन मार्गेण इमाः द्राविंशाः

भाषाः भवन्ति। प्राकृत सर्वस्वस्य रचयिता मार्कण्डेय कवीन्द्रः रामतर्क वागीशस्याधारमवलम्ब्य प्राकृत भाषा विभागमेवं क्रमेण चकार।

१. महाराष्ट्री, शौरसेनी, प्राच्या, आवन्ती तथा मागधी (भाषाः)

२. शाकारी, चाण्डाली शावरी, आभीरिका मागधी (विभाषाः)

३. नागर, व्राचड़ तथा उपनगर (अपभ्रंशाः)

४. कैकेय, शौरसेन पाञ्चालाः च पैशाचभाषाः

अस्मिन् विषये एवं सम्यकवधारणीयं यत् उपर्युक्तभाषासु स्वात्मरूपं प्राकृतं न केवलम्, काश्चित् अपभ्रंश भाषाः संविद्यन्तेऽपि। यासां प्राकृतभाषा एव जननीस्वरूपा। एवंभूताः काश्चित् भाषाः अनुभूयन्ते याः वैदेशिकैरुचारतुमशक्याः ता आभीर्य्याः अस्तित्वं निरुपयन्त्येव। अपराः काल्पनिकाः भाषाः संदृश्यन्तेऽपि तद् यथा इमाः षट् पैशाची भाषाः। इमाः विहाय सर्वासां लौकिकयानां प्राकृत भाषाणां सम्पूर्ण परिगणनं नावधार्यते।

यतः यस्मिन् समये उपरि वर्णितानां प्राकृत वैयाकरणानां रचनाः संप्रचलिताः जायन्ते स्म तस्मात् प्राक् प्राकृतभाषाः लोकभाषाख्यायिकात् विच्युतासन्। तासां प्राकृतभाषाणां समुचित स्थानं तात्कालिकापभ्रंश भाषाः भारतीयार्य्यभाषाः प्राचीनमध्यकालीनं स्वरूपमुरीचकार।

एवंभूतायां स्थितौ वास्तवानां विविधानां तत्त्वानां सामग्रिक सम्मिलनं नैवसंभवमित्यस्मात् कारणात् प्राकृतव्याकरणे प्रस्तुता सर्व समभावान् विषयान् साहित्यरूपेणाङ्गी कृत्य पुनश्च कस्मिञ्चित् अंशविशेषे कल्पनाप्रसुतम् अवश्यमनुमन्तव्यम्।

पुनरपि विस्मितता समायाति दृष्ट्वेदं कतिपयैः वैयाकरणैः सर्वेषां साहित्यानां प्राकृतानामपि पुष्कलं वर्णनं न संस्थापितम्।

प्राकृतप्रकाश ग्रन्थेऽपि प्रकाश्यते यत् अर्धमागधी तुल्यायां विशेष प्राकृत[15] भाषायाः सम्यक् वर्णनं न समुपलभ्यते। जैनधर्मात् परं प्रचलितं साहित्य अर्धमागध्यातिरिक्तं शौरसेनी महाराष्ट्रयोरपि विलिखितम्। या शौरसेनी महाराष्ट्रयाः किंचिदंशेन भिन्ना भवति। तथापि कतिपयैः वैयाकरणैः एवमपि हेमचन्द्र जैनाचार्येणाऽस्मिन् विषये ध्यानं न प्रयच्छते।

अशोकस्यं तथा कतिपयानां राज्ञां शिलालेखासु कुडयालेखास्वपि तात्कालीनं प्राकृत भाषाणां बहुविधानि स्वरूपाणि यत् परिदृश्यन्ते आसां चर्चाकंदापिकेऽपि न कृतवन्तः एवं भूतायां स्थितौ कतिपयाः प्राकृतभाषाः काभिः नैतिक रीतिभिः प्रामाण्यन्ते बहु निश्चय विचारैः इदमपि न निगदितुं शक्यते। तथापि प्रौढ़साहित्यानां अन्येषामपि साहित्यिकानां प्रमाणं सुविदितम्। एवंभूतानां प्राकृतानां परिगणनं तस्य सविशेष लक्षणस्य वार्त्ता अधोरूपेण शक्यते उपस्थापयतिुम्। तद् यथा–

१. शिलालेख प्राकृतम्

२. ललितसाहित्य प्राकृतम्

३. जैनसाहित्य प्राकृतम्

## प्राकृत शिलालेखः

एवंभूताः शिलालेखाः वर्त्तन्ते यासु समधिकं प्रमाणं ख्रीष्टपूर्वात् चतुर्थशतकादारभ्य तृतीय शतकं यावत् उपलभ्यन्ते, एषु शिलालेखेषु अशोकस्य तथा खारवेलस्य लेखाः सुप्रसिद्धाः भवन्ति। इदं प्रमाणं सर्वैः सुविदितं यत् प्रियदर्शिना अशोकेन स्वकीयान् विंशति शिलालेखानात्मनः धार्मिक सिद्धान्तस्य प्रचारणाय देशस्य विभिन्नप्रान्तेषु निर्मियते स्म।

एषां विशेषत्वमिदं यत् इमे शिलालेखाः यत्र सुप्रतिष्ठिताः तत्र तेषामधिवासीनां लोकमुखभाषा लिपि च सुलिखिताः विद्यन्ते। पश्चिमोत्तर प्रान्ते मानसेहरायां तथा सहवाजगडयां लेखाः खरोष्ठीषु तथा ब्राह्मी लिपिषु वर्त्तन्ते। भाषाणां विभेदः प्रायशः सर्वासु भाषासु लक्षन्ते, इत्यन्तरं प्राच्यानां पाश्चात्यानां लेखानां भाषासु बहुभिन्नता प्रवर्त्तते। विदुषामयं विचारः यत् अशोकस्य सर्वेषु धर्मग्रन्थेषु लेखेषु वा तत्कालीन प्राकृतकथनं प्राकृततां प्रकटयतीति। कालस्याः शैललेखस्य भाषा प्राध्यापकः लुडर्स महोदयः प्रोवाच यत् इत्यप्यर्धमागधी रूपम् भवति। खारवेलस्य हस्तिगुम्फायाः अभिलेखादुदयगिरेः गंह्वराणां अभिलेखः प्राचीनतमः मुख्यश्च। अस्य समयः खीष्टपूर्वः द्वितीय शताब्दि भवति। मूलाभिलेखः अतीव जीर्णावस्थायां विद्यते। तथाप्यस्य भाषायाः अशोकेन पूर्व

लिखितयाऽभिलेख भाषया साकं समानता परिदृश्यते। अनेन प्रकारेण अन्येषामभिलेखानां सम्बन्धः अवधेयः। अत्र नास्ति काचित् विचिकित्सा यत् उपर्युक्त लिखितानां तात्कालीकानां प्राकृत भाषाणां मूलभूतेयं प्राकृतभाषा। यस्मात् परवर्त्तीभिः साहित्यिकैः रचिताः संजाताः। तथापि आसां प्रचलितानां तत्कालीन साहित्य भाषाणामिदृशी समानता न दृश्यते, कथितभाषास्वपि एवंभूतं सादृश्यं स्पष्टतया न प्रतीयते, येन परवर्त्ती प्राकृतभाषाभिः सह आसां समुचितः सम्बन्धः स्यात्।

## प्राकृत ललितसाहित्य

सर्वाः ललित साहित्य रचनाः अधोलिखितेष्वप्युपलभ्यते तद् यथा– महाराष्ट्री शौरसेनी मागधी पैशाच्यश्चः।

**महाराष्ट्री** - इयं महाराष्टयासु चतसृषु भाषासु प्राचीनतमेति मान्यते। प्राकृत व्याकरणे आदावास्याः सम्यक् विवेचनं कृतं विद्वद्भिः। इमां आदिभूतां विचार्य अनन्तरम् शौरसेन्यादिनां विचारः प्रकटितः। प्राकृत व्याकरणानुसारेण अतः सर्वश्रेष्ठतां अधिकरोति। कवि शेखरेण श्रीमता दण्डिना स्वीक्रियते इयं महाराष्ट्री सर्वोत्तमा एव। महाराष्ट्र प्रान्ते भाषा वहुल प्रचरणात् प्रसरणात् पुनः व्यवहारात् च अस्याः बहुमान्यता वर्त्तमाना विद्यते।

कतिपयाः महाराष्ट्रीयाः इमं महाराष्ट्रं शब्दं महाभारतं इति प्रवदन्ति, परन्तु एवंभूतां सम्भावनां वयं न गृह्णिमः अस्यामालोचनायाम्। यतः इयं महाराष्टयाधिकाधीकाः मराठयेति प्राकृत भाषायां स्थूलरूपेण प्रवर्त्तन्ते। यस्यां अवस्थाभ्यां महाभारतस्य बहुप्रान्तीयानांभाषाणां वर्त्तमानता न विद्यते। महामहता विदुषा पिशलेनेयं महाराष्ट्री भाषा महाराष्ट्रेति प्रान्तेन सहपूर्णतया संवन्धितेति स्वीक्रियते। स्वस्थाः सावलीलतायाः सुकुमारतायाः कारणात् गद्यकाव्येषु अधिकाधिकां मान्यतां स्थास्यति। इदानीन्तनीया गाथा सप्तसती रचनायां इयं भाषा सरलतया गान धर्मीणि तिष्ठति। "गौड़वहो तथा दहमुहवहो" सेतुवन्ध तुल्यानि काव्यानि प्राकृतमहाकाव्य रूपेणावस्थापितानि मान्यानि भवन्ति च। वहुषुसंस्कृतप्रसिद्धकाव्येष्वास्याः पद्यभागः परिदृश्यते। संक्षेपेण यथा सम्भवानि उदाहरणानि प्रदेयान्यियधः।

१. "न", "य", "श", ष कारान् विना आदौ प्रयुक्त असंयुक्ताः अपि कश्चित् व्यञ्जन ध्वनिः न परिवर्त्तिष्यन्ति।

(क) सर्वासु स्थितिषु "न" कारस्य णत्वरूपं भवत्येव, तद् यथा– नमः > इति णमः, वचनं इति वचणं, मनोरथः > मणोरहो।

(ख) "य" कारस्य परिवर्त्तनं "ज" कारेण संभवति, तद् यथा यमुना > जमुणा एव, कार्यम् > कज्जम् एव।

(ग) "श" कार "ष" कारयोः परिवर्त्तनम् "स" कारेण भवति – यथा, शेषः भवति सेसः एव।

२. पदादौ स्थितयोः "क" कार "ष" कारयोः कदाचित् क्रमेण "ख" कारेण "फ" कारेण परिवर्त्तनं भवति। तद् यथा– कुब्जः > खुज्जो रूपेणेति पनसः > फणसो इति।

३. पदमध्यवर्त्तीनाम् असंयुक्तानां क, ग, च, ज, त, द, प, य, व काराणां प्रायशः लोपः सम्भवति।

४. पदमध्यवर्त्तीनाम् असंयुक्तानां "ख", "घ", "थ", 'ध', 'फ', भानां प्रायशः "ह" कारेण परिवर्त्तनम् भवति।

५. वाक्यमध्यवर्त्तिनो "ट" "ठ" कारयोः क्रमेण "ड" कारेण "ढ" कारेण परिवर्त्तनम् भवति। तद् यथा– वटः > वड़ो, पठनम् > पढणम्।

६. स्वरमध्यगतस्य असंयुक्तानां पकारस्य प्रायशः "व" कारं रूपं भवति तद् यथा – दीपः > दीवो।

७. (क) संयुक्तेषु व्यञ्जनवर्णेष्वपि "कगड़तदपवस" एतेषां वर्णनां ध्वनिरूपेण साम्यता प्रवर्त्तते। तद् यथा- युक्तम् > जुतं, क्षुब्धम् > छुब्धं, खड्गः > खंड़गो, उत्पातः > उत्पाओ, मुद्मः > मुंग्गो, सुप्तः > सुतो, षष्ठः > छटठोः।

(ख) ल् व् र् संयुक्त ध्वनेः अंगत्वं लब्ध्वापि अन्य वर्णानाम् ध्वनिरूपेण सर्वदैव स्वीक्रियते तद् यथा– > विल्वम् > वेल्लं। वल्कलम् > वक्कलं, तक्रम् > तक्कं, धर्म > धम्मो।

(ग) ष्क्, ष्ख्, ष्ट्, ष्ठ्, ष्त्, स्थ, स्प्, स्फ, – क्रमेण अनेन रूपेण क्ख्, ट्ठ, त्थ्, प्फ, परिवर्त्तनम् भवति। तद्यथा– पुष्करम् > पोक्खरं, विष्टरम् > विट्ठर, पुष्पम् > पुप्फं, हस्तः > हत्थो।

(घ) "क्ष", "द्य", शब्दयोः आदौ क्रमेण ख्, ज् तथा मध्यभागे "क्ख्" > "ज्ज्" रूपेण परिवर्त्तन्ते, तद् यथा– 'क्षेत्रम् > खेत्तं, नक्षत्रम् > णक्खत्तं, द्युतिः > जुई, विद्या > विज्जा।

(ङ) स्न, ह्म, ह्न वर्णाः क्रमेण ण्ह्, मह्, न्ह रूपेण परिवर्त्तन्ते तद्यथा– स्नानम् > ण्हाणं, ब्राह्मणः > वम्हणो, चिह्नम् > चिन्हें।

८. शब्दरूपेण एवंभूता प्रवृत्तिः परिदृश्यते। तद् यथा–

(क) व्यञ्जनान्त रूपं परिसमाप्तं भवति।

(ख) द्विवचनस्य लोपः भवति।

(ग) चतुर्थ्याः लोपः अपि तादृशः।

(घ) प्रायशः सर्वाणिरूपाणि अकारान्त शब्देन समं उच्चार्यते।

(ङ) स्त्रीलिङ्गस्य आकारान्त, ईकारान्त, उकारान्त रूपाणि दीर्घत्वेन पर्यवसन्ति।

(च) केषाञ्चित् शब्दानाम् अपि लिङ्गपरिवर्त्तनं दृश्यते।

(छ) युष्मदस्मदोः रूपविषये अनेकानेकानाम् विभक्तीनाम् अनेकानिरूपाणि प्रदर्श्यन्तें। तद् यथा– मयि > मई, मए, ममम्मि, ममस्सिं।

९. (क) धातुरूपेष्वपि एवंभूताः प्रवृत्तयः दृश्यन्ते, लकाराणाम् संख्या पञ्चभागेषु अवस्थिताः केवलम्।

(ख) द्विवचनस्य रूपं न भवति कुत्रापि।

(ग) अनेकानाम् संस्कृत धातुनाम् शुद्ध रूपाणि ध्वनिकारेण नैव स्वीकृतानि अपि तु एषां स्थानेषु नुतनाः धातवः प्रयुज्यन्ते।

(घ) सर्वेषां धातुनाम् अतीतकालरूपेषु केवलं वर्त्तमानकालः उपलक्षते।

(ङ) प्रायशः आत्मनेपदीनाम् धातुनाम् व्यवहारः स्वल्पः।

१०. संस्कृतभाषायाः क्त्वाच्, तूण्—ऊण्, तुमुन् प्रत्ययः सिद्धानां रूपाणां उ, दु इतिरूपेण संदृश्यते, स्था धातोः स्थाने "चिष्ठ" इति भवति।

अन्यानि सर्वाणि वचनानि शौरसेनी रित्या प्रचलति।

**पैशाची** - अस्यापरं नाम पिशाचिका इति कथ्यते। पुनश्चापि पैशाचः भूतानां भाषितं। केचन प्रवदन्त्यप्येयं भाषा भूत भाषितं। अनेन प्रकारेण इमां प्राकृत पैशाच्यर्वाचिन संस्कृत साहित्येषु प्रचलिताः प्रसिद्धाः पिशाच शब्दाः अयमर्थः अस्यां प्ररूढः। अनेन पिशाचशब्देन सार्द्धं भूतइत्यस्य शब्दस्य सम्मेलनं विद्वद्भिः क्रियते स्म। यः भूतशब्दः अनेन सार्द्धं प्रचलितः तदपि सात्यन्तिकः भ्रमात्मकः। काश्मीरं निकषा निवसन्तः अधिवासिनः पिशाघाः इति महाकाव्यस्य महाभारतस्य व्यासमहाकविना उल्लिख्यते। इमं महाभारतोल्लेखं अवलम्ब्य जार्ज ग्रियरसनेन काश्मीरस्य आफगान् स्थानस्य तयोः मध्यवर्त्ती स्थानेषु पैशाची प्राकृतस्य प्ररूढ़ प्रयोगः दृश्यत्येति उक्तम्। अस्य महाभागस्य मतानुसारेण हिन्दुकुशस्य पैशाच्याः साकं दरदः, काफिरः, शिणा, काश्मिरः इति भाषाणाम् सम्बन्धः परिदृश्यते।

अधुनाप्यस्याः भाषायाः किमपि साहित्यं नोपलभ्यते। तथाप्यनुमियते यदयं भाषा लोकभाषा आसीत्। समये तस्मिन् सावलील सरस साहित्यानां रचनां सम्भवेदिति सम्भावना। महाकविना गुणाढयेन अनया भाषया विश्वविश्रुतः महान्कथा वृहत्कथासरितसागरः विरचितः। अनुमियते यत् अयं महान्ग्रन्थः द्वादशशतकं यावत् काश्मीरप्रान्ते विद्यते। यतः अस्मिन् शतके महाकविः क्षेमेन्द्रः सोमदेवश्च वृहत्कथामञ्जरी कथासरित सागरस्य प्रतीकरूपेण संस्कृतभाषया अलिखताम्। अनन्तरम् हम्मीरमदमर्दन नाटके अप्यस्याः प्रयोगः उपलभ्यते। षड्भाषा चन्द्रिका रचयितुः लक्ष्मीधरस्य मतानुसारेण अस्याः प्रयोगः राक्षस पिशाच तुल्यैः पात्रैः प्रयुज्यते। हेमचन्द्रेण अस्याः चुलिका पैशाची इति अन्यः भेदः समुल्लिखितः। इयं पैशाची कस्मात् प्रान्तात् समायाता इति निश्चित रूपेण न परिष्क्रीयते। रामतर्क वागीशोऽपि इमाः तिस्रः मार्कण्डेयेन कविचन्द्र साकं अस्याः

षड़्भेदान् लाक्षणिक भावेन परिगण्यते। इदमपि न हि सुनिश्चितं एतासु युक्तिसु उक्तिसु च किदृशि सत्यता वर्त्तन्ते।

कतिपयानां विशिष्टानां उदाहरणानां लक्षणं एवंभूतम्–

१. वर्णस्य तृतीय चतुर्थ वर्णस्थानेषु क्रमेण प्रथम द्वितीय वर्णौ भवतः। तद् यथा– नगरम् > नकरं, मेघः > मेखो
२. 'र' कार 'ल्' कारयोः व्यत्ययः क्रमं दृश्यते तद् यथा– रुद्रः > लुद्दो, आदरः > अलले।
३. "ण्" कारस्य स्थाने "न्" कारस्य व्यवहारः सुप्रसिद्धः। तरुणी > तलुनी
४. महाराष्ट्रभाषया तुल्यं स्वरव्यञ्जनानां लोपः न भवति (वुल्न्र)
५. महाप्राणस्पर्शक्षमः "ह" कारः अस्यां महाराष्ट्री भाषायाम् न प्रवर्त्तते।
६. ष्ट, स्न, र्य, ज्ञ, ञ्ज कन्याशब्दानाम् "न्य" इति ध्वनिना सह क्रमेण सट, सन, रिय, ञ्ज, च्च, ञ्ज भवन्ति एव, तद् यथा– कष्टम् > कसटं, स्नेहः > सनेहो, भार्या > भारिया, सर्वज्ञः > सव्वञ्जोः। कार्यम् > कच्चं, कन्या > कञ्जा।
७. हृदय शब्दस्य स्थाने "हितअक" शब्दस्य प्रयोगः भवति।
८. क्त्वाच् इति प्रत्ययस्य स्थाने "तून" इति आदेशः भवति।
९. "इव" इति तुल्यार्थकस्य अव्ययस्य "पिव" उच्चारणं भवति।

**जैन प्राकृत** - येषु ग्रन्थेषु जैन धर्मेण सह समधिकः सम्बन्धः विद्यते, इमे सर्वे ग्रन्थाः विद्वद्भिः जैन प्राकृतम् इति अभिधीयते। उपर्य्युक्त शिलालेखेषु प्राकृत साहित्येषु कतिचित् भेदभूतः वादः स्पष्टः भवति इति कारणात् प्राचीन प्राकृत वैयाकरणाः अधिकाधिक स्थानेषु अस्य स्पष्टवर्णनं न वर्णयन्ति। तथापि आसां प्राकृतभाषाणां स्वतन्त्रास्तित्वं विद्यते। अनेन हेतुना इमानि सर्वाणि तत्त्वानि न परित्यज्यानि। तथाभूताः प्राकृतभाषाः अधः वर्ण्यन्ते।

(क) अर्धमागधी
(ख) जैनमहाराष्ट्री

(ग) जैन शौरसेनी

आसां सर्वासां विशेष संकेतरूपा इदं लक्षणमभिधत्ते।

## (क) अर्धमागधी

जैन विद्वांसः अस्य शब्दस्य शाब्दिकार्थं गृहीत्वा भिन्न मतं प्रतिपादयन्ति। अन्ये केचन अर्धमागध्याः निर्वचनमवलम्ब्य इमां मागध्याः अर्ध विशेषतां प्रतिपादयन्ति। मागध्यासह समानताफलेन इमां प्रतिवेशिनी भाषामिति मन्यन्ते। परन्तु मूल जैनागमस्य भाषा मागध्याः वहुभेदपरा भवति इत्यनेन कारणेनोपरि लिखितं निर्वचनं तथा अर्थमनुपपन्नमिति प्रतीयते। अस्मात् हेतोः जैनग्रन्थेषु कुत्रचित् अपि "मगः ध विषये भासा निवद्धमर्धमागहम्" इति सूत्रमुल्लिखितम्। यस्थार्थः तात्पर्यात् एवं भवति मगध देशस्य अर्धभागेषु जनैः इयं कथ्यते। अतः इमाम् अर्धमागधी इत्युच्यते। इयमर्धमागधी कस्य प्रदेशस्य भाषा आसीत्, अयं सम्बन्धः अधुनाऽपि न सुनिश्चितः। अष्टाविंशति तीर्थंकरस्य वर्धमान वीरस्य तथा वुद्धदेवस्य उपदेशाः अनया भाषया उल्लिखिताः। अतः इयमर्धमागधी पूर्वोत्तर प्रदेशस्य भाषा भवेत्, परं पूर्वोत्तर प्रदेशस्य कथिताः भाषाः भोजपुर्यावधी भाषासु अस्याः मुख्यानि लक्षणानि न प्राप्यन्ते। अनेन कारणेनोक्त मान्यतायां प्रश्नः प्रवर्त्तते। लक्षणालोचनया इदमपि प्रतिपन्नं भवति, यदेयं महाराष्ट्री प्राकृत भाषा आधुनिक मराठी प्राकृतया भाषया सह अधिक साम्यतां प्रतिपादयति, इदम् अपि परिदृश्यते। इदं तत्वमवलम्ब्य हार्नलि तुल्यैः विद्वद्भिः जैन ग्रन्थेषु लिखितामर्धमागधीमार्ष प्राकृतमिति मानयन्तः, अपि घोषयन्ति यत् गच्छत्सु कालेषु अस्याः अर्धमागध्याः साहित्यिक अर्धमागध्याः महाराष्ट्रादीनां भाषाणामुद्भवः भवति, एवं भवतु। अर्धमागधी श्वेताम्बरस्य सम्प्रदायस्य सर्वागमग्रन्थानां भाषा भवति। याभ्यः इमामर्धमागधीं प्राक् प्रसिद्धा भाषेति कथ्यते। कतिपयानां विदूषां मतेन 'बुद्धदेवस्य मुखनिसृताः भाषा इयमपि भवत्येव। अनन्तरं पालीभाषया या अनुद्यते। अर्धमागध्याः कतिपयानि विशिष्ट लक्षणानि एवं भूतानि–

१. स्वर मध्यवर्त्ती तथा असंयुक्त "क्" प्रायशः 'ग्' भवति। कदाचित्

"त" तथा "य" कारयोः रूपेण परिदृश्यते। तत् यथा– लोकः > लोगो, आकरः > आगरो, अधिकम् > अहितं (क् > त), अवकारः > अवयारे।

२. स्वर मध्यवर्त्ती तथा असंयुक्त "ग्" प्रायशः विद्यते परं कदाचित् "त" अथवा 'य' रूपेण परिवर्त्तते। तत् यथा आगमनम् > आगमणं, अतिगम् > अतितं (ग > त), सागरः > सायरे।

३. स्वरमध्यवर्त्ती तथा असंयुक्त "च्" तथा "ज्" कारयोः स्थाने कदाचित् 'त' कदाचित् 'य' भवति। तद् यथा– नाराचं > णारातं, कदाचित् > कयाति, पूजा > पूता, आत्मज > अत्तय।

४. स्वरमध्यवर्त्ती असंयुक्तं "त्" प्रायशः तत् स्वरूपं गृह्णाति परं कदाचित् "य" भवत्येपि। तत् यथा– सततम् > सततं, करतलम् > करयलं।

५. स्वरमध्यवर्त्ती "द्" प्रायशः 'द' कार तथा 'त' कार रूपेण परिदृश्यते। तत् तथा– जनपदः > जणवदे, यदा > जता।

६. स्वरमध्यवत्तीः "प", "व" कारस्य रूपं गृह्णाति, तद् यथा– अतिपातः > अतिवाते, उपनीतः > उवणीते।

७. स्वर मध्यवर्त्ती "य" प्रायः स्वयं विद्यते। कदाचित् "त" कारस्य रूपं गृह्णाति। तत् यथा– प्रिय > पिये, पर्यायः > परिताते, गायति > गातति।

८. स्वर मध्यवर्त्ती 'व', 'व्', 'त' तथा 'य' कारे परिदृश्यते, तद् यथा– गौरवम् > गारवं, परिवारः > परिताले, परिवर्त्तनम् > परियहणं।

९. "न्", "न्" तथा "ण" वर्णस्य स्थाने परिदृश्यते। तत् यथा– नदी > नई, अनिलः > अनिले, वाचना > वायणा, नमति > णमति।

१०. आकारान्तात् शब्दात् परस्य विसर्गस्य प्रायशः "ए" कदाचित् "ओ" भवति। तत् यथा– जिन्नः > जिणो, वुधः > वुहो। सर्वनाम शब्देषु द्वौ वर्णौ भवतः कः > के, को।

११. केषाञ्चित् शब्दानां तृतीया एकवचनस्य स्थाने "सा" प्रत्ययः समायाति। तत् यथा– मनसा > मणसा, वचसा > वयसा।

१२. क्त्वा प्रत्ययस्य स्थाने, त्ता, त्तु, तूण्, ऊण्, इय, इत्ता, इत्ताणं, एत्ताणं प्रत्ययाः प्रयुज्याः।

१३. तुमुनिति अस्य प्रत्ययस्य अर्थे "इत्तए", "तुं", तथा उं इत्यस्य प्रयोगः भवति।

१४. धातुनाम् भविष्यति काले "ष्य" स्थाने "स्स" भवति, तथा स्स स्थाने हिति वर्णस्य प्रयोगः लभ्यते, तत् यथा गच्छिस्सयि > गच्छिहियि।

अतीतकाले सर्वत्र "इसु" प्रतययस्य प्रयोगः लभ्यते।

## (ख) जैन महाराष्ट्री

मूल जैनागमात् परं जीनैः यत् प्राकृतं विशाल साहित्यं विलिखितं अस्य प्रधान भागः जैन महाराष्ट्रया भाषया लिख्यते। "वृहत कल्पभाष्य व्यवहार सूत्रभाष्यं, विशेषाक भाष्यं "निशीथ", "धर्म संग्रहणी", "समरा इति कहा", "कुवलयमाला", "वसुदेव", "गौमतरीय" तुल्येषु ग्रन्थेषु अस्याः महाराष्ट्रयाः प्रयोगः लभ्यते। महाराष्ट्रयाः मूल प्रवृत्तिः अर्धमागध्याः लभ्यते अपि। इदमनुमीयते यत् इयं महाराष्ट्री भाषा साहित्य महाराष्ट्रयाः समधिकं प्राचीनाः भवति। सम्भाव्यते यत् अस्मिन् समये जैनधर्मः दक्षिण भारते शनैः शनैः प्रविशति स्म। तथा च अस्मिन् दक्षिण भारते जनाः विशेष भावेन महाराष्ट्रीयाः लोकाः इमां आदौ न स्वीकुर्वन्ति स्म। अनेन कारणेन अस्यां अर्धमागध्याः महाराष्ट्रयाः च लक्षणं लभ्यते। तथापि महाराष्ट्रयाः कस्मिश्चित् भेदे स्थिते सति यतः जैनैः इयं भाषा व्यवहृता। अतः इमां जैन महाराष्ट्रीमिति कथ्यते। अस्याः मुख्यानि विशेष तत्त्वानि अधः वर्ण्यन्ते।

१. असंयुक्त क प्रायशः "ग" कार रूप गृह्णाति। तत् यथा– आकारः > आगारो, कन्दुकं > कन्दुअं

२. लुप्त व्यञ्जनानां स्थानेषु "य" वर्णः लभ्यते। यथा कथानकं > कहायणं (क > य), भगवता > भगवया (त > य), गदा > गया (द > य), कचिग्रह > कयग्गहो (च > य)

३. न् कारस्य स्थाने "ण्" कारेण समं नस्य अपि प्रयोगः प्राप्तः। यथा नगरी > णयरी, नूनं > णूनं, निपन्नः > नुवण्णो।

४. "यथा" "यावत्" अनयोः द्वयोः स्थाने क्रमेण "अहा", "आव" प्रयोगः उपलब्धः।

५. केषांचित् समस्त पदानाम् उत्तर पदस्य पूर्व "म्" कारस्य आगमः भवति। अन्न + अन्नम् > अन्नमन्नं।

६. तृतीया एकवचने कदाचित् "सा" इति वर्णस्य प्रयोगः लभ्यते।

७. "क्त्वा" इति प्रत्ययस्य स्थाने तूण, ऊण, च्चा, त्तु उपलभ्यन्ते।

८. क्त प्रत्ययान्त शब्दः "ड" कारान्तः परिदृश्यते। यथा– व्यापृतम् > वावड़ं।

९. "अस्" धातोः सर्वेषु कालेषु पुरुषेषु वचनेषु "आसी" रूपं भवति।

१०. अन्याः विशेषताः महाराष्ट्र्या समं भवन्ति।

## (ग) जैन शौरसेनी

दिगम्बर सम्प्रदायस्य सिद्धान्त ग्रन्थाः यया भाषया रचिताः इमाः सर्वाः शौरसेन्याः प्रकायन्ते। यथा प्रवचनसार-कार्त्तिकेयानुप्रेक्षा - गोम्मट्टसार - समयसार कषायप्राभृतादीनां ग्रन्थानां भाषा इयमेव भवति। अस्याः शौरसेन्याः एकं रूपं भवति। यस्मात् कारणात् अस्यां शौरसेन्यां जैनधर्मस्य सर्वे ग्रन्थाः विरचिताः। इयमप्यं अंशानेन महाराष्ट्र्या अर्धमागध्या सह सम्मिलिता। अनेन कारणेनेयं प्रसिद्ध साहित्यिक शौरसेन्याः भाषायाः भिन्ना जैन शौरसेनी कथ्यते। विदूषां मतानुसारेण अस्यां भाषायां जैन महाराष्ट्र्याः अर्धमागध्याः प्रभावः समधिकः। येन कारणेन जैन महाराष्ट्र्याः इयं समधिक प्राचीना भवति।

अस्याः कतिपयानि विशेष लक्षणान्यधः वर्ण्यन्ते।

१. 'त' 'थ' कारयोः स्थाने क्रमेण "द", "ध" कारयोः प्रयोगः दृश्यते। तत् यथा– विगतः > विगदो, जातः > जादो, यथा > जधा, कथम् > कध।

२. "त" कार स्थाने "त" कदाचित् "य" भवति। यथा– तथा > तधा, गतम् > गयं।

३. "क" कारस्य स्थाने "ग" इति वर्णेन साकं 'क' कारः तथा "य" कारः उपलभ्येते, यथा– स्वकम् > सगं, श्रावकः > सावगो, चिरकालम् > चिरकालं, सुखकरः > सुहयरो, प्रत्येकम् > पत्तेयं।

४. मध्यवर्त्ती असंयुक्त क्, ग्, च्, ज्, त्, द्, प् – एवंभूतानां वर्णानां स्थाने स्वरूपः विद्यमान भवति। कदाचित् वर्णलोपः भवति, अस्याम् अवस्थायां "य" कारस्य प्रयोगः भवति। यथा लोकः > लोयो, वचनम् > वयणं ("च" लोप पुनः "य" श्रुतिः) वहुभेदा > वहुभेयो ("द" लोपः, पुनः य श्रुतिः) वेदना > वेयणा आदि।

५. लुप्तवर्णः यद्यपि उ कारात् परं भवति तदा "व" कारस्य प्रयोगः भवति। यथा वहुकम् > वहुवं, विधुतम् > विहुवं।

६. अकारान्त शब्दात् परं विसर्गः "ओ" कार रूपेण व्यवह्यिते। यथा– जीनः > जीणो।

७. सप्तमी एकवचने "स्मि" तथा "म्हि" भवतः। तथा षष्ठ्याः चतुर्थ्याः बहुवचने "सिं"। तत्वत् पञ्चमी एकवचने "आदो", "आदु" चिह्नम् उपलब्धम्। यथा– शुभे > सुहम्मि, चरिके > चरियम्हि। तेभ्यः > तेषाम् > तेसि, स्वभावात् > सहावादो, सहावादु।

८. करोति इति रूपस्य स्थाने "कुव्वदि", "करेदि", "कुणेदि", "कुणइ", "करेइ" आदीनां व्यवहारः उपलब्धः।

९. "क्त्वा" प्रत्ययस्य स्थाने "त्ता", "च्चा", "दूण", ऊण", "य" वर्णानाम् व्यवहारः लभ्यते। यथा– "ज्ञात्वा" > जाणता, कृत्वा > किच्चा, गृहित्वा > गहिय, गत्वा > गमिऊण, कृत्वा > कादण।

१०. सर्वासां क्रियाणामनिवार्य रूपस्थाने "त" कारस्य स्थाने "द" कारस्य प्रयोगः भवति। यथा– भवति > भोदि, मन्यते > मण्णदि, भासते > भासदि।

११. "श" तथा "ष" कारयोः स्थानयोः "स" कारस्य प्रयोगः भवति। यथा– शेषः > सेसो।

# प्राकृतव्याकरणस्यपरम्परा प्राकृतप्रकाशश्च

उपर्युक्तालोचनया इयमेव प्रतीतिः भवति यत् प्राचीन काले प्राकृतम नेकरूपेण विभक्तमासीत्। एवञ्चाप्यत्र एतादृशः पाणिनेः अपेक्षासीत् यः इदं व्याकृत्य तथा विशीर्य्य व्यवस्थापितं कुर्य्यादस्य रूपम्। कथनवाहुल्यमेतत् सा एवहि अपेक्षा इदानिमपि तथैव वरीवर्त्ति संस्कृतस्य अपेक्षा पाणिनिना यथैव परिपूर्णतां गता न तथा प्राकृतस्य। विगतायाम् शताब्द्यां पञ्चशदधिकं प्राकृत व्याकरण विलिखतम्। किन्तु न किमपि व्याकरणं संस्कृतस्याष्टाध्यायी व्याकरणमिव विराजते। इदमपि आश्चर्य यस्याः भाषादिगचुम्विनि प्राकृत भाषायाः विशालं साहित्यं विराजते तस्याः भाषायाः न तथा स्वयं सम्पूर्ण व्याकरणमस्ति। अपरपक्षे अस्याः सगोत्रायाः पालिभाषायाः एकाधिकं व्याकरणं विराजते। यदि च आचार्य हेमचन्द्रेण संसारमूलभाषायाः प्राकृतभाषायाः उपरि अष्टाध्यायात्मकं "सिद्धहेमशब्दानुशासनम्" नामकं व्याकरणम् विरचितं तथापि तस्य मूलं सप्ताध्यायं केवलं संस्कृत व्याकरणस्य विस्तृता प्रक्रिया एव। येन संस्कृतस्याङ्गत्वेन प्राकृतः परिगण्यते, न तु स्वस्य स्वतन्त्रं व्यक्तितत्वमुपस्थापयितुं समर्थं भवति। आचार्य हेमचन्द्रस्य पूर्ववर्त्तिनः परवर्त्तिनोपि आचार्याः यदि वा प्राकृतस्योपरि स्वतन्त्रा विवेचनां प्रस्तुवन्ति, तथापि ताः सर्वाएव संस्कृतात्मिकाः। येन प्राकृतव्यःकरणमद्यापि आत्म-

प्रकाशने असमर्थमिति वक्तुं शक्यते। अतएव विभिनैः कारणैः प्राकृतं जनसमाजे लोकभाषा भवितुमसमर्था जाता। या भाषा जनमुखे नैव प्रचलति स्वस्य व्यवहारिक रूपं जहाति सा मृतभाषा रूपेण परिगण्यते। एतत् सर्वं मनसि निधाय प्राकृत भाषायाः व्यवहारिक प्रणालि लोके उपस्थापयितुं प्राकृतप्रकाशस्य अनुशिलनस्य सर्वादौ करणीयम्। इदमेव व्याकरणमस्याः भाषायाः सारल्यरूपमुपदिशति। अस्य व्याकरणस्य दिग्दर्शनेन प्राकृतभाषा एकाजीवित भाषा भवति। अस्याः व्यवहारः जनसमाजे कार्त्तुं शक्यते इति काऽपि धारणा समुदेति।

## भरतः (नाट्यशास्त्रम्)

नाटयशास्त्रस्य रचयिता आचार्य भरतस्य स्थितिकालः खिष्टपूर्वः द्वितीय शतकः इति विदुषामाशयः। अनेन संस्कृत नाटके पात्र प्रयुक्त भाषायाः चर्चा प्रसङ्गे स्वस्य नाटयशास्त्रस्य सप्तादशाध्याये प्राकृतस्य चर्चा कृता। अत्रापि मागधी, आवन्ति, प्राच्या, शौरसेनी, अर्धमागधी, वाह्लिका, दाक्षिणात्या इति क्रमेण भाषागणनादनन्तरम् (1) शकरी, (2) आभिरी, (3) चाण्डालि, (4) शावरी, (5) द्राविड़ी, (6) उड्रजा इति विभाषाणाम् उल्लेखः कृतः। अत्र इदमेव उपदिष्टं, कीदृशः पात्र विशेषः, कीदृशीं भाषां, विभाषां च व्यवहरेत्। यदि च द्वाविंशत्यध्याये प्रसङ्गेस्मिन् उदाहृतम्, तथापि आचार्यस्य इदं संक्षिप्तं अस्पष्टं च प्राकृत विवेचनम् अस्याः भाषायाः विषये वास्तविकं समीचीनं च तत्त्वम् प्रदातुं समर्थ भवति।

## चण्डः (प्राकृत लक्षणम्)

केचन विद्वांसः आचार्य चण्डस्य इदं प्राकृतलक्षणं प्राकृतभाषायाः प्रथमम् उपलब्धं व्याकरणम् इति स्वीकुर्वन्ति। प्रसिद्धः पाश्चात्य विद्वान हार्नोलि महोदयः अस्य पुस्तकस्य इशवीय १८८० संवत्सरे कलकत्ता नगरे सर्वादौ प्रकाशनमकरोत्। अयमेव ग्रन्थः सूत्रात्मकः। अस्य तृतीयाध्याये नवति अथवा १०३ सूत्राणि उपलभ्यन्ते। अत्र व्याकरणे मागधी, शौरसेनी, पैशाची इत्यासामुल्लेखः भवति। किन्तु सामान्यतया चण्ड व्याकरणे प्राकृत विवरणमशोक धर्मलिप्यां व्यवहृतात् प्राकृतात् अर्वाचिनं भवति, तथापि प्राकृतप्रकाशात् प्राचीनमिति विचारः कर्त्तुं

शक्यते। हारनोलि महोदयस्य विचारस्तु मूलजैनागमस्य भाषा अर्ध-मागधी भवति। अतः अयमाचार्यः इशवीय प्रथमशतक निकटवर्त्ती इति विचार्यते।

परन्तु चण्ड - व्याकरणस्य काल निरुपणे प्रसिद्धः फ्रेञ्च विद्वान् ज्यूलो ब्लाख् किमपि नूतनं मतं स्वीकुरुते। तन्मते तु चण्डव्याकरणं अतीव अर्वाचिनमस्ति। यतोहि—

१. चण्डः जैन विद्वानासीत्। अनेन वर्धमान महाविरः प्रणम्यते, एवञ्चापि "जिनवरः" इति "अर्हन्त" अनयोः शब्दयोः उल्लेख कृतोऽस्ति। एतदर्थमयं चण्डः स्वस्य धर्मभाषया अर्धमागध्या एव स्वकीय व्याकरणं लिखितम्, न तु भिन्नेन केनापि प्राकृतेन।

२. "लक्षणंप्राकृतंवक्षे किञ्चिदबृद्धमतादह" इति वचनेऽस्मिन् व्यवहृतं वृद्धपदमस्य पूर्ववर्त्तिनः आचार्यमवश्यमेव स्मारयतिं।

३. यद्यपि प्राकृतलक्षणं प्राकृत प्रकाशात् पूर्ववर्त्ति व्याकरणं स्यात् तर्हि प्राकृत प्रकाशे प्राकृत लक्षणस्य प्रभावः अवश्यं निपतीत्, किन्तु तत्तु भवत्येव नहि।

एततसर्वं मनसि निधाय ज्यूलो ब्लाक् महोदयः प्राकृत प्रकाशस्य परवर्त्तिव्याकरणं "लक्षणं" इति निगदति।

## वररुचिः (प्राकृत प्रकाशः)

प्राकृत व्याकरणे समुपलब्धेषु ग्रन्थेषु आचार्य वररुचेः प्राकृत प्रकाशः अन्यतममसन्दिग्धं सर्वतन्त्रं स्वतन्त्रं व्याकरणम्। अस्मिन्येव व्याकरणे सर्वाधिकाः टिकाः विराजन्ते। एतासु टिकासु प्राचिनतमा टिका रूपेण मनोरमा टिका स्वीकृता। यस्याः टिकाकारः भवति आचार्य भामहः। अयं काश्मिर निवासी सुप्रसिद्धः आलंकारिकः इशवीय पञ्चमशताब्द्यां भूमिष्ठः वभूव इति ऐतिहासिकानां मतम्। अतएव प्राकृत प्रकाशस्य रचनाकालः अवश्यमेव चतुर्थ शताब्द्याः निकटवर्त्ति इति वक्तुं शक्यते।

अयं वररुचिः कः आसीत् इति विषये विदुषां मतभेदः वर्त्तते। प्रसिद्धः अष्टाध्यायी वार्त्तिककारः कात्यायनः वररुचेः अपरपर्यायः इति यदि वा केचन वदन्ति तन्न। यतो हि वार्त्तिक-प्राकृत प्रकाशयोः रचना शैली पृथकभूता एव। अस्मिन्येव प्राकृतप्रकाशे द्वादश परिच्छेदाः सन्ति।

येषु ४८७ सूत्राणि सन्ति इति भामहस्य मतम्। महामहोपध्याय मथुरा प्रसाद दिक्षितः प्राकृतप्रकाशे ५०९ सूत्राणि सन्ति इति आमनुते। अस्य प्राकृतप्रकाशस्य नवपरिच्छेदेषु सामान्य प्राकृतं व्यवहृतमस्ति। किन्तु द्वादशपरिच्छेदे स्थितं "शेषंमहाराष्टीवत्" इति सूत्रं महाराष्ट्री प्राकृत विषये विवक्ति। अत्र प्रथमपरिच्छेदे संस्कृत स्वराणां प्राकृते परिवर्तन काले कथंभूतं सामान्य विशेषं वा रूपं भवेत्। द्वितीय परिच्छेदे असंयुक्त व्यञ्जनस्य, तृतीय परिच्छेदे संयुक्त व्यञ्जनस्य, चतुर्थ परिच्छेदे कतिपयानां विशिष्ट शब्दानां ध्वनेः विषये च चर्चा कृतास्ति पञ्चम परिच्छेदे, षष्ठ परिच्छेदे अपि सुवन्त शब्दानां सम्बन्धे एवञ्च सर्वानाम शब्दानां विषये आलोच्यते। सप्तम परिच्छेदे धातुरूप विषयिणी चर्चा, अष्टम परिच्छेदे संस्कृत धातोः प्राकृते परिवर्त्तन प्रक्रिया कृतास्ति। नवम परिच्छेदे निपातानाम् अव्ययनाम् विवरणं प्रदत्तं। अस्मिन्येव नवमे परिच्छेदे "शेषः संस्कृतात्" इति सूत्रमिदमस्मिनध्याये असाधितानां शब्दानां संस्कृतशब्दानामिव रूपसिद्धिर्भवेदिति घोषणा आचार्येण कृता। इदं सूत्रम्इममेव विचारं प्रस्तौति यत् महाराष्ट्रीप्राकृतस्य मूलप्रकृतिः भवति संस्कृतम्। दशम परिच्छेदे पैशाची प्राकृतस्य अनुशासनं कृतमस्ति। एवञ्चाप्यस्याः प्रकृति शौरसेनी इति स्वीकृताम्। एकादश परिच्छेदे मागधी प्राकृतस्य विवेचनं कृतम्। यस्य मूल प्रकृतिः भवति शौरसेनी। अन्तिमे द्वादश परिच्छेदे शौरसेनी प्राकृतस्य निरुपणं भवति।

स्वकीय रचनाशैल्या सरलया गिरां प्राकृतप्रकाशः सर्वजनग्राह्यः भवितुं समर्थः। अस्य लोकप्रियशैल्या विमुग्धः केरल निवासी कवि श्रीकृष्णलीला शुकः प्राकृत प्रकाशस्थितानां प्रयोगाणामाधारेण "सिरिचिंधकव" नामक प्राकृत काव्य विरचितवानिति प्राकृत-प्रकाशस्य माहात्म्यम् न केवल भारतवर्षे अपि तु पाश्चात्ये भूयसि चर्चा परिलक्षते। प्राकृत प्रकाशस्योपरि यद्यपि अनेकाः व्याख्याः परिदृश्यन्ते तासु निम्नोक्तः व्याख्याः नितरां मूर्धनीभूता।

## (क) मनोरमा

काश्मिर निवासी पण्डितः प्रसिद्धालंकारिकः आचार्य भामहः मनोरमा

टिकां विलिखितवान्। "बुद्धवा चकारवृत्तिं संक्षिप्तान् भामह स्पष्टाम् इति मङ्गलाचरणांशे इयं संक्षिप्त टिकारूपेण यदिवा भामहेन प्रोक्ता तथापि संक्षिप्ताप्येयं सर्वजनमनोहारिणी दिगन्तविस्तारिणि किर्त्तीशालिनी।

## (ख) प्राकृतमञ्जरी

प्राकृतप्रकाशस्य इयं खलु अन्यतमा श्लोक निवद्धा टिका प्राकृतमञ्जरी। अस्याः अनुशीलनेन एतदेव ज्ञातुं शक्यते यत् अस्याः टिकायाः लेखकः भामहकृतया मनोरमया सह अवश्यं परिचितं भवेत्। अतएव अयं भामहस्य परवर्त्ति इति वक्तुं शक्यते। यदि च अस्याम् व्याख्यायाम् टिकाकारः न कुत्रापि स्वस्य नाम उल्लिखति, तथापि अयं कात्यायनः इति केचित् वदन्ति। परन्तु मतमिदं नैव सर्वजन ग्राहकम्। यदि च अस्यां भमिकायां कात्यायनः शब्दः उच्चारितः अनेन, अयं कात्यायन शब्दः आचार्य वररुचि उदिश्यत कृतोऽस्ति। अतएव अयं टिकाकारः इदानिमपि अज्ञातम्।

## (ग) प्राकृतसञ्जिवनी

प्राकृतप्रकाशस्य अन्यतमा इयं प्रसिद्ध टिका प्राकृत सञ्जिवनी पर्य्याप्ता विस्तृता च इयं टिका कदाचित् स्वतन्त्र ग्रन्थरूपेण विविच्यते। अस्य टिकाकारः वसन्तराः अस्ति। अस्य वसन्तराजस्य नामोल्लेखः सप्तदश शताब्ध्याम् मार्कण्डेय कवीन्द्रेण स्वकीये प्राकृत सर्वस्वे कृतः। अतएव अयं सप्तदश शताब्ध्यां पूर्ववर्त्ति इति वक्तुं शक्यते। आचार्य बलदेव उपाध्यायस्य मतेन अस्य वसन्तराजस्य अपरं नामः कुमारगिरिः आन्ध्रप्रदेशस्य कस्यचित् विशिष्ट मण्डलस्य राजासीत् यस्य शासन-कालः चतुर्दशः शतकः। इयमेव टिका विशदा प्रैढा प्रमेय वहुला च। भामहापेक्षया कानि-चन अधिकार सूत्राणि विरच्यन्ते। केषाञ्चित् सूत्राणां पाठान्तरमपि टिकायां अस्यां परिदृश्यन्ते।

## (घ) सुबोधिनी

वस्तुतस्तु प्राकृत सञ्जीवन्याः लघुरूपा इयं टिका भवति सुवोधिनी। अस्याः टिकाकारः सदानन्द पञ्चदश शतक सप्तदश शतकयोः

मध्यवर्त्ति इति आचार्य बलदेव उपाध्यायस्य अभिमतं। इयं टिका अष्टमनवमपरिच्छेदं यावत् उपलभ्यते।

### (ङ) चन्द्रिका

आधुनिक युगस्य विशिष्ट विद्वान् म. महोपाध्याय मथुरा प्रसाद दिक्षितः प्राकृतप्रकाशस्योपरि इमां चन्द्रिका टिकां विरचयति। यदि च अस्यां टिकायाम् "प्राकृत सञ्जीवनी", "सुवोधिनी" अनयोः टिकयोः प्रभावः निपतति, तथापि अस्याः मौलिकता अक्षुण्णा वलशालिनि च।

### (च) दीप्तिः

डॉ. श्रीकान्त पाण्डेय महोदयेन दीप्तिनाम्ना हिन्दीटीका कृता। अस्यां टीकायां प्राकृत शब्दानामुदाहरणानि संस्कृत शब्दात् कीदृशं सृष्टमिति आचार्येण उक्तम्। न तु केवल उदाहरणानां ससूत्र साधनं परन्तु प्राकृतशब्दरूपं धातुरूपमित्यादिनां सूची ग्रन्थस्य अन्तिम भागे परिशिष्टे प्रदत्ता। इदं तु ग्रन्थस्य नूतनतां प्रतिपादयति।

### (छ) अम्बिका

प्राकृतप्रकाशस्य अन्यतमा इयं नूतनाटीका अम्बिका चतसृभिर्व्याख्याभिः संवलिता। सदानन्दकृता सुबोधिनी, वसन्तराजकृता सञ्जीवनी, भामहकृता मनोरमा, कात्यायनरचिता च पद्यबद्धा प्राकृतमञ्जरीति। इयमेव टीका प्राकृतशब्दान् व्याकरण सूत्रेण सह व्युत्पादयति। अद्यतन समाजे प्राकृतव्याकरणं प्रति छात्राणं वैराग्य-मनोभावं परिलक्ष्य ससूत्र साधनेन प्राकृतभाषां पुनः सरलीकर्त्तुं प्रयासः कृतः। ग्रन्थोऽयं छात्राणां अध्यापकानां शोधकर्त्तृकाणां कृते च सर्वादौ उपयोगी भविष्यतीति दृढं प्रत्येति।

## सिद्धहेमशब्दानुशासनम्

पाणिनेः अष्टाध्यायी" सदृशं अष्टाध्यात्मकं विशालोऽयं ग्रन्थः। स्वयं ग्रन्थकारेण "वृहती" तथा "लघुवृत्ति" इति व्याख्याद्वयं लिखितम्। हेमचन्द्रेण सिद्धहेमशब्दानुशासने - प्रथम अध्यायादारभ्य सप्तमाध्यायं यावत् संस्कृत व्याकरण विषये तथा चरमोऽंशः

प्राकृतविषयकः संहब्धः तथान्तिमाष्टमाध्याये षट् प्राकृतभाषाणाम्– महाराष्ट्री, शौरसेनी, मागधी, चूलिकापैशाची, पैशाची तथा अपभ्रंश भाषाणाम् विशद विवरणस्य प्रस्तुति लभ्यते। अस्य ग्रन्थस्य लेखकः हेमचन्द्रेण प्राकृत व्याकरणस्य उपलब्ध सामग्रीं प्रकाशितुं प्रयत्नेन भगीरथ सदृशं। प्रथम सप्ताध्याये १११९ सूत्राणि "प्राकृत- प्रकाशस्य द्विगुणतां प्रकाशयति, तथा ग्रन्थस्य विशालतां प्रतिपादयति।

हेमचन्द्रः गुजरात प्रदेशस्य अणहिल्लपट्टणस्य राजा सिद्धराजस्य आश्रितासीत्। अतः अस्य कालं १२ इशवीय।

ग्रन्थस्य मुख्य विशेषता एतादृशं–

१. अपभ्रंशभाषाणाम् सर्वप्रथम निरूपणम्।
२. अपभ्रंश भाषाणामुदाहरण रूपेण तत्कालीन लोकभाषया रचित पद्यानाम् प्रचुरमात्रेण प्रस्तुतीकरणम्।
३. चूलिका पैशाची इति प्राकृतभाषायाः सर्वप्रथम उल्लेखं विश्लेषणं च।
४. "प्राकृतप्रकाश" स्य प्रभावः परिलक्षितोऽपि नूतन नियमाना-मुद्भावना।

## प्राकृतानुशासनम्

बंग प्रदेशस्य ख्यातनामा कोशकारः तथा वैयाकरणः पुरुषोत्तमदेवः अस्य ग्रन्थस्य लेखकः। अस्य कालं १२ इशवीय इति अनुमीयते। विंशाध्याय विशिष्टमऽयं ग्रन्थः। किन्तु सम्पूर्ण रूपेणाद्यावधि न उपलब्धम्, यतः प्रथम दौ अध्यायौ तथा तृतीयाध्यायस्य अर्धभागं नष्टप्रायः।

अस्मिन् ग्रन्थे महाराष्ट्री, शौरसेनी, मागधी, आवन्ती तथा पैशाची भाषाणाम्, शाकारी, चाण्डाली, शाबरी टाक्की आदि विभाषाणाम् विशद तथा स्पष्ट निरुपणमुपलब्धं, अनेन प्रकारेण पुरुषोत्तमदेवेन प्राकृतस्य सर्व विवरण प्रदानेन प्रयत्नंकृतम्।

विषयस्य निरूपणं प्राकृतप्रकाशस्य सदृशं। अस्य ग्रन्थस्य प्रकाशनं प्राकृत कल्पतरू ग्रन्थस्य परिशिष्टे प्राप्तम्।

## प्राकृतव्याकरणवृत्ति

जैन धर्मावलम्बी त्रिविक्रमः अस्य ग्रन्थस्य रचयिता। कतिपयैः विद्वद्भिः अस्य ग्रन्थस्य रचयिता वाल्मीकि इति स्वीक्रियते। अन्यैः कतिपयैः विद्वद्भिः, त्रिविक्रमः अस्य ग्रन्थस्य रचयिता इति स्वीक्रियते। सूत्राणामुपरि हेमचन्द्रस्य प्रभावः निपतति तथा सूत्रसंख्या १०८६.

मल्लिनाथस्य पुत्र कुमारस्वामिना प्रतापरुद्रीयस्य "रत्नापण" व्याख्यायाम् त्रिविक्रमस्य नामोल्लेखं कृतम्, अतः त्रिविक्रमस्य कालं ईशवीयस्य निकटवर्त्ती इति निर्द्धारितं भवति।

आचार्य बलदेव उपाध्यायस्य मतेन त्रिविक्रमस्य वृत्तिः पाण्डित्यपूर्णम्। उदाहरणस्य प्रचुरता परिलक्षते। अस्य वृत्तिः अष्टाध्यायी ग्रन्थस्य काशिका वृत्यासह तुलनीयम्, यतः सूत्रकारेण निर्दिष्ट सूत्राणां क्रमपरिवर्त्तनं न कृतम् अनेन लेखकेन।

## षड्भाषाचन्द्रिका

लक्ष्मीधरः अस्य ग्रन्थस्य रचयिता, ग्रन्थकारस्य मतेन त्रिविक्रमस्य वृत्तेः व्याख्यास्वरूपमऽयं ग्रन्थः, प्राकृतव्याकरणस्य प्रक्रियाग्रन्थ स्वरूपम् अयं ग्रन्थः षडभाषाचन्द्रिका। पाणिनि व्याकरण "अष्टाध्यायी" ग्रन्थस्य प्रक्रियाग्रन्थ "सिद्धान्तकौमुदी" ग्रन्थस्य सदृशम्।

## प्राकृतकल्पतरु

बंगप्रदेशस्य ख्यातनामा पण्डित रामतर्क वागीश भट्टाचार्यः अस्य ग्रन्थस्य रचयिता। भारतस्य पूर्वभागे लिखिमिदं ग्रन्थं प्राकृतव्याकरण ग्रन्थेषु मूर्द्धनी भवति। अस्य ग्रन्थकारस्य कालं १५ तथा १६ इशवीय स्य निकटवर्त्ती इति स्वीक्रियते।

पद्यबद्ध रचनाशैली "कुसुमं" रूपेण परिचितम्। तिसृभिः शाखाभिः संवलितः ग्रन्थोऽयम्। ग्रन्थेअस्मिन् कतिपयानि अनिश्चित स्तवकानि तथा प्रति स्तवके कतिपयानि कुसुमानि वर्त्तन्ते। ग्रन्थकारस्य मतेन ३५७ कुसुमानि वर्त्तन्ते अस्मिन् ग्रन्थे। परन्तु ३५२ कुसुमानि लभ्यते।

प्रथमायाम् शाखायाम् महाराष्ट्री, शौरसेनी, प्राच्या, आवन्ती, वाह्लीकी, मागधी, अर्द्धमागधी तथा दाक्षिणात्य, द्वितीय शाखायाम्

शाकारिका, चाण्डालिका, शावरी, आभीरिका तथा टक्की विभाषाणाम्' तृतीय शाखायाम् नागर ब्राचड तथा पैशाचिक अपभ्रंश भाषाणाम् विषये सविशद विचारं परिलक्षते।

ग्रन्थकारस्य स्वव्याख्यामपि उपलब्धं अष्टस्तवकं यावत्। ग्रन्थकारेण प्राकृत पद्यानि उदाहरण रूपेण उद्धृतम्। अनेन ग्रन्थस्य महत्वं वर्धते। विषय विवेचन तथा सूत्र निर्माणादि दृष्ट्या प्राकृतानुशासनस्य प्रभावः परिलक्षते, परन्तु ग्रन्थस्य स्वयं विशेषता ग्रन्थस्य मौलिकतां स्पष्टीकरोति।

## प्राकृतसर्वस्व

आचार्य ''मार्कण्डेय कवीन्द्रकृत'' प्राकृतसर्वस्व ग्रन्थः प्राकृतव्याकरण ग्रन्थेषु अन्यतमः। मार्कण्डेयेन, उत्कलस्य राजा मुकुन्ददेवस्य राजत्व समये ग्रन्थं सम्पूर्णं कृतवानिति उल्लिखितम्[१]। अतः अस्य स्थितिकालः मुकुन्ददेवस्य समयस्य (१६६६) निकटवर्त्ती इति निश्चितम्।

सम्पूर्ण ग्रन्थः विंश पादेन विभक्तः। ग्रन्थस्य प्रमुख नवपादेषु महाराष्ट्री प्राकृत भाषायाः विस्तृतं वर्णनं परिचयमपि प्राप्तम्। अन्तिम पादे शौरसेनी प्राच्या आवन्ती तथा मागधी इति चतस्त्र भाषाः, शाकारी, चाण्डाली, शावरी, आभीरिका तथा टाक्की एताः पञ्च विभाषाः, नागर, ब्राचड तथा उपनगर एताः तिस्त्र अपभ्रंश-भाषाः, केकय, शौरसेन, पाञ्चाल एताः पैशाचभाषाणाम् संक्षेप निरूपणमपि लभ्यते। अतः ग्रन्थे विवेचितानांभाषाणाम् संख्या १६ भवति। याः भाषाः सर्वेभ्यः प्राकृत व्याकरणेभ्याधिकम्।

ग्रन्थस्य अनुशीलनेन स्पष्टमिदं प्रतीयते यत्, मार्कण्डेयः प्राकृत भाषया सह संस्कृत-साहित्यमध्ययनं कृतवान्। प्राकृतशब्दानाम् शास्त्रीय विवेचनमपि अनेन कृत।

## प्राकृतरूपावतारः

आचार्यः सिंहराजः प्राकृतरूपावतारग्रन्थस्य रचयिता। अस्य कालं १८ इशवीय इति अनुमियते। ''त्रिविक्रमवृत्ति'' ग्रन्थमाधारीकृत्वा ५७५ सूत्रेण ''मध्यसिद्धान्त कौमुदी'' सदृशं प्रक्रियानुसारेण प्रस्तुतं कृतमनेन

वैयाकरणेन।

ग्रन्थेऽस्मिन् महाराष्ट्री भाषां व्यतिरेके शौरसेनी मागधी, पैशाची, चूलिकापैशाची तथा अपभ्रंश भाषाणाम् निरूपणमपि कृतम्।

संस्कृतवत् प्राकृतस्य विभिन्न रूपावलि अस्य ग्रन्थस्य महत्वं प्रतिपादयति। रिचर्ड पिशल महोदयस्य मतमपि ग्रहणीयमस्मिन् प्रसङ्गे—"संज्ञा तथा क्रियापदानां रूपावली निमित्तं प्राकृतरूपावतार अतीव महत्वपूर्णम्। कतिचित् स्थाने सिंहराजेन, हेमचन्द्रः तथा त्रिविक्रमः आचार्येभ्यःअधिकरूपाणि प्रदेयानि। निःसन्देह अनेकानि रूपाणि नियमानुसारेण निर्मितम्, साधितम् वा, परन्तु नूवीनानि रूपाणि व्याकरण नियमानुसारेणाऽपि साधितम्, अतः अस्य, विषयमिदं अतीवसरसं"[२]।

## संस्कृतभाषया लिखितं प्राकृतव्याकरण पुस्तकानाम् संक्षिप्त परिचय

क्रमदीश्वरः अस्य ग्रन्थस्य रचयिता। अष्टाध्यायैः संवलितः ग्रन्थऽयम्। प्रथमे सप्ताध्यायेषु संस्कृत व्याकरणस्य विवेचनम् तथा अष्टमाध्याये प्राकृतस्य विवेचनं कृतम्। पिशल महोदयस्य मतेन, हेमचन्द्रस्य परवर्त्तिनः अयमाचार्यः।

### प्राकृतानन्दः

ग्रन्थस्य लेखकः रघुनाथः शर्मन्। ग्रन्थेऽस्मिन् प्राकृतप्रकाशस्य सूत्राणाम् प्रक्रियानुसारेण वर्णनम् लभ्यते।

### षडभाषासुवन्तरूपादर्शः

नागोआ अस्य ग्रन्थस्य रचयिताः। पिशलमहोदयस्यमतानुसारेण नूतनग्रन्थोऽयम् तथा प्रक्रियानुसारेण सूत्रैः संयोजितम्।

### प्राकृत चन्द्रिका

संस्कृतस्य महावैयाकरणः शेषश्रीकृष्णः अस्य ग्रन्थस्य रचयिता। ग्रन्थे अस्मिन् ४४१ श्लोकानि वर्त्तन्ते, रचनाकालं १६ इशवीय, ग्रन्थकारस्य स्वव्याख्यामप्यस्ति।

**प्राकृतमणिदीपः**

मध्ययुगीय प्रसिद्धः दार्शनिकः आलंकारिकः अप्पय्यदीक्षितः अस्य ग्रन्थस्य रचयिता। ग्रन्थोऽयं "त्रिविक्रमवृत्ति" इत्यस्य ग्रन्थस्य आधारभूत कतिपयानि अत्यन्त महत्वपूर्णसूत्रैः समष्टैः "लघुकौमुदी" सदृशं निर्मितम्। क्षुद्रग्रन्थऽयम्। अस्य रचनाकालः १६ इशवीय।

**शब्दचिन्तामणिः**

जैन धर्मावलम्बी शुभचन्द्रः अस्य ग्रन्थस्य लेखकः।

**औदार्यचिन्तामणिः**

जैन धर्मावलम्बी श्रुतसागरः अस्य ग्रन्थस्य रचयिता।

**प्राकृत व्याकरणम्**

जैन धर्मावलम्बी समन्तभद्रः अस्यग्रन्थस्य रचयिता।

**प्राकृतयुक्तिः**

जैन धर्मावलम्बी देवसुन्दरः अस्य ग्रन्थस्य रचयिता।

**जैनसिद्धान्तकौमुदी**

आधुनिकः प्रसिद्धः व्याकरण ग्रन्थऽयमार्द्धमागधी प्राकृत भाषया रचितम्। ग्रन्थकारस्य प्राकृत ज्ञान विषये गम्भीर परिचयं प्रददाति अयंग्रन्थः।

**प्राकृतानुशासनम्**

पुरुषोत्तमदेवः अस्य ग्रन्थस्य लेखकः।

**प्राकृतशब्दरूपावली**

प्रतापविजयः अस्य ग्रन्थस्य लेखकः।

## पाश्चात्य भाषाभः प्राकृतभाषा सम्बन्धीकार्यम्

आधुनिकयुगे प्राकृतभाषया निवद्ध जैनागमानामध्ययन त्वात् पाश्चात्य शिक्षा प्राप्त भारतीय विद्वद्भिः प्राकृत भाषायाः गम्भीर-मध्ययनं कृताः। अस्मिन् विषये तैः, संस्कृत भाषया निवद्ध (सम्पादित) प्राकृतव्याकरणं पुस्तकानाम् वैज्ञानिक संस्करणं प्रस्तुतंकृता। अपि च

स्व भाषया नवीन पद्धत्या प्राकृतव्याकरणग्रन्थानाम् रचनां कृता। यथा—

१. "डे प्राकृत डिआलेक्टो लिबि दुओ" (जर्मन्) होएफर (१८३६)
२. "इन्स्टीट्यूत्सी ओनेस् लिगुंआग प्राकृतिकाए" (जर्मन्) लास्सन्
३. औसगे वैस्ते एर्त्से लुंगन इन महाराष्ट्री, (जर्मन्),—याकोवी (१८८६)
४. "डे ग्रामाटिकस प्राकृतिकिस" (जर्मन्), व्रातिस्लावा, १८७४
५. "एन इन्ट्रोडक्सन् टू प्राकृत" (आङ्गलोभाषा) बुल्नर (१९१७, १८ अस्य ग्रन्थस्य हिन्दी अनुवादः "प्राकृत प्रवेशिका" नाम्ना परिचिता।
६. "ग्रामाटिक देर प्राकृत स्प्रारवेन (जर्मन)—रिचर्ड पिशल १९००।

अस्य ग्रन्थस्य आङ्गलो अनुवादः डाँ सुमद्राझा तथा हिन्दी अनुवादः डॉ. हेमचन्द्र जोशी महोदयैः कृता।

७. "ए ग्रामर आफ दि प्राकृत लैगंवेजेज" (आङ्गलोभाषा)—दिनेश चन्द्र महोदयः (१९३९)
८. "एन् इण्ट्रोडक्शन टु अर्द्धमागधी—(आङ्गलोभाषा)—ए एन घाटगे, (१९४०)
९. ए शर्ट इण्ट्रोडक्शन टु द आर्डिनारी प्राकृत आफ द संस्कृत ड्रामाज विद ए लिस्ट अफ कामन इरेगुलर प्राकृत वर्ड्स—(आङ्गलोभाषा)—कौवे। (१८७५)
१०. "अर्द्धमागधीरीडर"—(आङ्गलोभाषा) वनारसीदास जैन।

## भारतीय भाषासु लिखितग्रन्थाः

१. "**प्राकृतमार्गोपदेशिका**"—(गुजराती) बेचरदास जीवदास दोशी, (१९५९)
२. "**प्राकृत विमर्श**"—(हिन्दी) डॉ. सरयूप्रसाद अग्रवाल (१९५३)
३. "**अमिनव प्राकृतव्याकरण**"—(हिन्दी) डॉ. नेमिचन्द्र शास्त्री, (१९६३)

४. "प्राकृत और उसका साहित्य–(हिन्दी) डॉ. हरदेव बाहरी।

## प्राकृतप्रकाशस्यवैशिष्ट्यम्

प्राकृतव्याकरणस्यपरम्परा तथा संस्कृतभाषया रचित प्राकृत व्याकरण ग्रन्थोपरि "प्राकृतप्रकाश" ग्रन्थस्य महती प्रभावः परिलक्षते।

१. "प्राकृतप्रकाशः" इति ग्रन्थे महाराष्ट्री, शौरसेनी भाषयोः मूलप्रकृति संस्कृतं तथा "मागधी", पैशाची" भाषयोः प्रकृति शौरसेनी इति निर्दिश्यते। इयं उक्ति उत्तरवर्त्ती व्याकरणेऽपि समरूपेण लभ्यते।

२. "प्राकृतप्रकाशः" इति ग्रन्थे महाराष्ट्री भाषायाः सामान्य प्राकृतरूपस्य विवेचनं तथा तामाधारी कृत्वा अन्य विशिष्ट प्राकृतभाषाः विविच्यते। अन्य प्राकृत ग्रन्थे इदमार्गमिति स्वीक्रियते।

३. प्राकृतप्रकाशे वर्णितमन्य प्राकृत भाषाणां वैशिष्ट्यं, संशोधित तथा परिवर्धित रूपे अन्येषु ग्रन्थेषु लभ्यते।

४. प्राकृतप्रकाशस्य वहुनि सूत्राणि परवर्त्ती व्याकरणग्रन्थेषु वैयाकरणैः संयुज्यते। अस्मिन् सम्बन्धे हेमचन्द्रकृत "प्राकृतव्याकरणं" विशेषरूपेण ग्रहणीयम्। अनेन इदमेव सिद्धं यत् प्राकृतप्रकाशस्य सूत्राणि तदुत्तरवर्त्ती वैयाकरणेभ्यः आदर्शमेव।

५. प्राकृत विवेचन विषये "युक्तवर्णविधि" तथा "सुब्विधि" आदि रूपेण यानि विधानानि प्राकृतप्रकाशे विविच्यते, तानि सर्वाणि विधानानि तदुत्तरवर्त्ती व्याकरणग्रन्थेषु उपलभ्यते।

६. प्राकृतानांविवेचन स्वतन्त्ररूपे नाङ्गीकृत्वा संस्कृत भाषायाः विकास रूपे तेषां अध्ययनंकृतम् या, सर्वेषु व्याकरणग्रन्थेषु उपलभ्यते।

७. "संस्कृत व्याकरण" स्य पारिभाषिक शब्दाः तथा तस्य उत्सर्गापवादौ, पद्धति च प्राकृतप्रकाशे येन रूपेण वर्णितः प्रायतः अन्येषु व्याकरण ग्रन्थेषु तदरूपेण उपलभ्यते।

८. प्राकृतप्रकाशे वर्णितः सर्वाः प्राकृतभाषाः तदुत्तरवर्त्ती अन्य प्राकृत व्याकरण ग्रन्थेषु सम्यक्रूपेण उपलभ्यते। परन्तु "प्राकृत प्रकाशः" अस्मिन् ग्रन्थे अविवेचितः अर्द्धमागधी प्राच्या, आवन्ती तथा दाक्षिणात्यादि भाषाः तथा शाकारी, टाक्की, आभीरी च विभाषाः, पैशाच भाषाणामनेकानि रूपाणि कतिपयैः विद्वद्भिः कृताः, किन्तु तासु कतिपय भाषाः प्राकृतस्य सीमा वहिर्भूता तथा अन्याभाषाणाम् प्रयोगमपिललितसाहित्ये नभवति। अतः 'प्राकृतप्रकाशे' तात्कालीन साहित्ये प्रयुक्त प्राकृतभाषाणाम् विवेचनासीत् इति निष्कर्षः।

प्राकृतप्रकाशः, प्राकृतव्याकरणस्य सूत्रपातेन सह अनेकै रूपैः तस्य परम्परां प्रभावितं कृतः।

## प्राकृतप्रकाशे कतिपय दोषमेव वर्त्तते

१. प्राकृतप्रकाशस्य कतिपय अध्यायेषु पौर्वापर्य विपर्यास कारणेन कतिपय स्थानेषु आन्तरिक संङ्गतेरभावः परिलक्षते। उदाहरण स्वरूपं द्वादशः परिच्छेदेषु प्रथम नव परिच्छेदः महाराष्ट्री प्राकृतभाषा विषये विविच्यते, परन्तु अस्मिन् विषये कुत्रचिदपि ग्रन्थकारेण नोल्लिख्यते। द्वादश परिछेदस्य अन्तिम सूत्रे "शेषं महाराष्ट्रीवत्" इति दशमः अध्यायस्य सम्बन्धः पैशाचीभाषया सह, एकादशः अध्यायस्य सम्बन्धः मागधी प्राकृतभाषया सह तथा द्वादशः अध्यायस्य सम्बन्धः शौरसेनी प्राकृत भाषया सह इति विविच्यते।

२. ग्रन्थस्य प्रारम्भे कतिपय सूत्राणाम भावः प्रतीयते। नवपरिच्छेदेषु विवेचितप्राकृतस्य नामोल्लेखः ग्रन्थे न लभ्यते न तु तस्या भाषायाः प्रकृतिविषये। द्वादशपरिच्छेदस्यान्तिम-सूत्रं "शेषं महाराष्ट्रीवत्", इति सूत्रे "महाराष्ट्री" पदस्य संकेतः नवसु अध्यायेषु प्राकृतेषु संश्लिष्टम्। उदयरामशास्त्रीडबरालमहोदयेन महाराष्ट्री पदस्य टिप्पण्यवसरे उक्तम्– "अत्र महाराष्ट्रीपदेन प्राकृतस्य ग्रहणं बोध्यम्"।

एतेन स्पष्टमिदं यत्, वररुचिना नव परिच्छेदेषु "महाराष्ट्री" प्राकृतपर्यायत्वेन अभिधीयते। तथा प्रकृतिरस्याः संस्कृतम्। अतः

हेमचन्द्रस्य प्राकृत व्याकरणे प्रथम सूत्रं "अथ प्राकृतम्" तथा द्वितीयसूत्रं "प्रकृतिः संस्कृतम्" इति उपलभ्यते।

३. कतिपयानि सूत्राणि स्थान भ्रष्टानीव प्रतीयते। यथा "क्तेन दिण्णादयः" सूत्रं अष्टमपरिच्छेदस्य धात्वादेश प्रकरणे लभ्यते। प्रकरणस्य संगतिस्तु न युक्तमि व्यनुमीयते।

४. कतिपयानि सूत्राणि स्व विवक्षितार्थं न प्रकाशयन्ति। यथा द्वादश परिच्छेदस्य सूत्रं "अनन्त्य एच्च"। विवक्षितार्थस्तावत् अनन्त्यस्य 'ए' कारः भवति शौरसेनी प्राकृतभाषायाम्। यथा करोति > करोदि। परं सूत्रस्थ "अनन्त्य" शब्दः अन्त्यभिन्नः सर्वेषु ध्वनिषु निर्दिश्यते, यथा "केरेदि" तथा "केरोदि"।

५. प्रसिद्धसाहित्यिकप्राकृत "अर्धमागधी" – विषये प्राकृतप्रकाशे न कुत्राऽपि उल्लिख्यते। श्वेताम्बर जैन सम्प्रदायस्य सर्वमूलागम ग्रन्थानां रचना अनया प्राकृतभाषाया कृता। अतः इयं तु प्राकृतप्रकाशस्य अन्यतमा त्रुटिः इति मन्यते।

६. कतिपयप्राकृत भाषाणामावश्यक नियमोऽपि न लभ्यते। मागधीप्राकृतस्य प्रकरणे टीकाकारः भामहेन पुरुषः > पुलिशे तथा राक्षसः लस्कसे इति उदाहरणानां अवधारणा क्रियते। एतेन स्पष्टमिदं प्रतीयते यत् संस्कृतस्य "र" कारध्वनिः मागधी प्राकृते "ल" - कारेण परिवर्त्तते। परं प्राकृतप्रकाशे नास्ति किञ्चिंत सूत्रं येनइदं परिवर्त्तनं नियमवद्धं भवति।

७. सम्पूर्णं "प्राकृतप्रकाशं" अधीत्यापि, प्राकृतभाषायाम् कतिध्वनीनाम् प्रयोगः भवति इति न कोऽपि वक्तुं समर्थः भवति। अतः हेमचन्द्रेण स्व रचित प्राकृतव्याकरणे प्रथमसूत्रस्य व्याख्याप्रसङ्गे आवश्यक-संकेतः प्रदत्तः।

परं निष्कर्षस्तु अयमेव प्राकृत व्याकरणेषु प्राकृत प्रकाशस्य स्व महत्त्वं वरीवर्त्तते।

प्रथमः परिच्छेदः

# अज्विधिः

### सुबोधिनी

**प्रणम्य परमं धाम सदानन्देन तन्यते।**

**वृत्तिः प्राकृतसूत्राणां शुद्धबोधानुबोधिनी॥**

**अज्विधिरयुक्तविधिरथ संयुक्तविधिस्ततश्चसङ्कीर्णः।**

**सुप्तिङ्धातु निपात विधयोऽष्टाविह परिच्छेदाः॥**

सिद्धशब्दः समाम्नायः। प्रकृतिप्रत्ययविभागाः पाणिनीयानुसारेण वेदितव्याः। अथ तत्र महाराष्ट्री भाषाऽनुवर्ण्यते।

### सञ्जीवनी

**अज्विधिरयुक्तविधिः संयुक्तविधिस्ततस्तु सङ्कीणः।**

**सुप्तिङ्धातुनिपातजविधयोऽष्टाविह परिच्छेदाः॥**

### १. आदेरतः

### सुबोधिनी

यद्वक्तव्यं कार्यं तदादिभूतस्यातोऽकारस्य वेदितव्यम्। अधिकारसूत्रमिदम्। आदेरित्यस्यापरिच्छेदसमाप्तेरधिकारः। अत इत्यस्य तु अदात इत्यादिसूत्रात् प्राक् (संख्या ९) ॥१॥

### सञ्जीवनी

अधिकारोऽयम्। इत ऊर्ध्वं यदनुक्रमिष्याम आदेरादिभूतस्यातोऽकारस्य तद्भवतीत्यधिकृतं वेदितव्यम्। आ परिच्छेदपरिसमाप्तेरादेरित्यस्याधिकारः। अत इत्यस्य 'आतो यथादिषु वा' (सूत्र संख्या ९) इत्यतः प्राक् ॥१॥

### प्राकृतमञ्जरी

**इदमन्धतमो भित्त्वा यज्ज्योतिर्भासते परम्।**

**नमो भगवते तस्मै सूर्याय परमात्मने॥१॥**

उदेतु भगवान् भानुरूदयाद्रेरिवात्मनः।
येन वाचो यथार्था नः स्फुरन्ति सगुणाः स्वयम्॥२॥
प्रसीदन्तु च वाचस्ता यासां माधुर्यमुच्छ्रितम्।
प्राकृतच्छद्मना चक्रे कात्यायनो महामुनिः ॥३॥
व्याकर्त्तुं प्राकृतत्वेन गिरः परिणतिं गताः।
कोऽन्यः शक्तो भवेत् तस्य कवेः कात्यायनादृते॥४॥
अहो तत् प्राकृतं चारू प्रियावक्त्रेन्दु सुन्दरम्।
सूक्तयो यत्र राजन्ते सुधानिष्यन्दनिर्भराः॥५॥
वन्दे वररूचिं तं च यत्प्रज्ञामञ्जरीमधुः।
अद्याप्यास्वादयन्त्येव हृद्यं विद्धन्मधुव्रताः॥६॥
कात्यायनप्रणीतेऽस्मिन् प्राकृताब्धौ तितीर्षया।
अप्रज्ञाप्रोततन्त्राय नमो मह्यं निमज्जते॥७॥
यावत् प्राकृतसूत्राणि व्याख्यास्यामो वयं पुनः।
न विद्यादर्पकण्डुत्या केवलं तद्विवित्सया॥८॥
तत्प्रसन्नाशयाः सन्तो दद्युः श्रवणगोचराम्।
इमां वररूचिप्रज्ञावल्याः प्राकृतमञ्जरीम्॥९॥
विब्रियन्तेऽत्र सूत्रार्था गम्यन्ते रूपसिद्धयः।
पठयन्ते च गणास्ते ते तत्र तत्र यथायथम्॥१०॥
आदेरित्यधिकारोऽयमापरिच्छेदपूरणात्।
अत इत्यपि तस्मात् प्रागात इत्यपि यो विधिः॥
एकस्मिन्नेव शब्दे स्यादेक एवादनेकशः।
आदेरिति तदादेः स्यान्न पदादेरिति स्मृतिः॥११॥

मनोरमा

जयति मदमुदित-मधुकर-मधुर रूताकलन-कूणितापाङ्गः
कर विहित-गण्ड-कण्ड-विनोद-सुखितो गणाधिपतिः॥२॥

वररूचि-रचित-प्राकृत-लक्षण सूत्राणि लक्ष्यमार्गेण

बुद्ध्वा चकार वृत्तिं संक्षिप्तां भामहः स्पष्टाम्॥

अधिकारोऽयम्। यदित ऊद्ध्र्वमनुक्रमिष्याम आदेस्तः तदभवतीत्येवं वेदितव्यम्। आदेरित्येतदापरिच्छेद समाप्तेः। अत इति चाकारविधानात् अत इति तकारग्रहणं सवर्ण निवृत्यर्थम्॥२॥

अम्बिका

या नित्यं मनुतेऽम्बिकां मधुमयीं स्वाभीप्सितां देवताम्
याऽसक्ताङ्गुरूपादपङ्कजयुगे नाम्ना पराम्बापदे।
सावित्री तनया च या वृत्तवती गौरीव्रतं पावनं
प्रोत्याऽसौ सलिला प्रकाशमहितं वक्ति श्रिया प्राकृतम्॥
अम्बिकाभिधटीकेयं प्राकृतार्थ प्रकाशिनी।
विदुषां परितोषाय भूयान्नूनं दिने-दिने॥

अधिकार सूत्रमिदम्। अस्मिन् परिच्छेदे, अस्मात् सूत्रादनन्तरम् यानि विधानानि उल्लोखिष्यन्त तानि सर्वाणि शब्दस्यादौ स्थितस्य" हृस्व-अ-कारस्यस्थाने एवं आदिष्यन्ते इति तात्पर्यम्।

सूत्रस्थ "आदेः" शब्दस्याधिकारः परिच्छेद समाप्तिं पर्यन्तं। परन्तु "अतः" (अ) पदस्याधिकारः परिच्छेदस्य नव सूत्राणियावत् वर्त्तते, यतः नवमसूत्रादनन्तरम् हृस्व "अ" कारस्यस्थाने दीर्घ "आ" कारस्य विधानं विधीयते।

पाणिनि सूत्रं "तपरस्तत्कालस्य" नियमेन सूत्रस्य "अत्" शब्दस्य 'त्' कारस्य ग्रहणं "हस्व अ" कारं वोधयितुम्, न तु दीर्घादि सवर्णानाम्। परिच्छेदेस्य नवम सूत्रं यावत् सर्व-विधानं शब्दस्यादौ स्थित हस्व 'अ' कारस्य स्थाने भवतीतिस्पष्टम्।

## २. आ समृद्ध्यादिषु वा

सुबोधिनी

समृद्ध्यादिर्गणस्तस्याऽऽदेरकारस्याऽऽकारदेशो भवति वा।

**समृद्धिः प्रतिषिद्धिश्च प्रसिद्धिश्च मनस्विनी।**

**अभिजातं प्रसुप्तञ्च प्रतिपत् प्रकटं तथा॥**

**सदृक्षमिति संप्रोक्तः समृद्ध्यादिगणः किल॥**

सामिद्धी, समिद्धी। पाडिसिद्धी पड़िसिद्धी। पासिद्धी, पसिद्धी। माणंसिणी, मणंसिणी। आहिआअं, अहिआअं। पासुत्तं, पसुत्तं। पाडिवआ, पडिवआ। पाअडं, पअडं। सारिच्छं, सरिच्छं। वाशब्दस्य व्यवस्थावाचित्वात् क्वचिन्नित्यमात्वम्। यथा वासअं, वासारत्तं, वर्षशतम्, वर्षारात्रम्। पासिण्णं, प्रस्विन्नम्। सासू, श्वश्रूः। एवमन्ये लक्ष्याऽनुसारेण बोद्धव्याः॥ २॥

**सञ्जीवनी**

आदिशब्दः प्रकारे। प्रकारः सादृश्यम्। तथा चोक्तम्-

**सामीप्येऽथ व्यवस्थायां प्रकारेऽवयवे तथा।**

**आदिशब्दं तु मेधावी चतुष्वर्थेषु लक्षयेत्॥**

तेन समृद्विशब्देन सदृशाः समद्धयादयः। तेषु समृद्ध्यादिषु शब्देष्वादेरादिभूतस्या तोऽकारस्याऽऽकारादेशो भवति वा। सामिद्धी, समिद्धी, समृद्धिः। सुप्रत्यये कृते स्वजातीयापेक्षया आदिभूतस्याकारस्यानेन बा आत्वम्। एवमन्येषूदाहरणेषु। इदृष्यादिषु वेति ऋकारस्येत्वम्। सुभिससुप्सु दीर्घ इति दीर्घत्वम्। अन्त्यस्य हल इति सुप्रत्ययत्य लोपः। पाडिसिद्धी, षडिसिद्धी, प्रतिषिद्धिः। सर्वत्र लवरामिति रलोपः। प्रतिसरवेतसपताकासु डः इति तकारस्य डः। शषोः स इति षस्य सः। दीर्घसुलोपौ पूर्ववत्। एवं पासिद्धी, पसिद्धी, प्रसिद्धिः। माणंसिणी मणंसिणी, मनस्विनी। वक्रादिष्विति नात्परोऽनुस्वारः। सर्वत्र लवरामिति वलोपः। नो णः सर्वत्रे नद्वयस्य प्रत्येकं णः। आहिआअं, अभिजातम्। कगचजतदपयवां प्रायो लोप इत्यादिना अनयोर्जतयोलोपः। खघथधभामित्यादिना भस्य हः। नपुंसके सोर्बिन्दुरिति बिन्दुः। पासुत्तं पसुत्तं, प्रसुप्तम्। सर्वत्र लवरामिति रलोपः। उपरि लोप इत्यादिना पलोपः। शेषादेशादिना तकारस्य द्वित्वम्। पूर्ववत् सोर्बिन्दुः। पाडिवआ, पडिवआ, प्रतिपत्। पूर्ववद् रलोपः। प्रतिसरवेतसपताकासु डः इति तस्य डः। पो वः इति पस्य वः। आदेस्तस्य न भवति। तत्रायुक्तस्यानादावित्यधिकारात्। स्त्रियामादित्यस्यान्त्यस्य हलः,

तस्य आत्वम्। अन्त्यस्य हल इति सुलोपः। पाअडं, पअडं, प्रकटम्। कगचजादिना कलोपः। टोडः इति डः। सारिच्छं, सरिच्छं, सद्दक्षम्। क्वचिद् युक्तस्यापीति ऋकारस्य रिः। अक्ष्यादिषु छः इति छः। तस्य द्वित्वे वर्गे युजः पूर्वः इति चकारः।

**समृद्धिः प्रतिषिद्धिश्च प्रसिद्धिश्च मनस्विनी।**

**अभिजातं प्रसुप्तं च प्रतिपत् प्रकटं तथा॥**

**सद्दक्षञ्चैवमादिः स्यात् समृद्ध्यादिगणः किल॥**

वाशब्दस्य व्यवस्थावाचित्वात् क्वचिन्नित्यमात्वम्। वाससअं, वासारत्तो, वर्षशतवर्षा रात्रयोः। शषोः सः इति शषयोः सः अदातो यथादिषु वा इत्यत्र वा आत्वम्। सर्वत्र लवरामिनि तयो रेफलोपः तत्रोपर्यध इत्यनुवृत्तेः केवलानां लवरां लोपाभावः। शेषादेशादिना तकारस्य द्वित्वम्। उभयत्रापि सकारस्य न भवति। 'विन्द्वादीदूत्परस्येह द्वित्वं शेषस्य नेष्यते' इति द्वित्वप्रतिषेधात् पासिण्णं, सासू प्रस्विन्नश्रश्रूशब्दयोः॥२॥

### प्राकृतमञ्जरी

अनेकेषामकाराणामकारस्यादिभाविनः।

समृद्ध्यादिषु शब्देषु स्यादाकारो विकल्पतः॥

समृद्धिरिति सामिद्धी समिद्धी वा भवेत् पुनः।

सद्दक्षमिति सारिच्छं सरिच्छं वा निगद्यते॥

प्रसुप्त इति पासुत्तो पसुत्तो वाभिधीयते।

शेषेष्वपि विमृश्यन्तामेवं रूपविपर्ययाः॥

समृद्धिश्च सद्दक्षश्च प्रसुप्तः प्रकटस्तथा।

प्रसिद्धिरभिजातिश्च प्रकृतिश्च मनस्विनी॥

प्रतिस्पर्द्धीति विज्ञेयः समृद्ध्यादिरयं गणः।

लक्ष्येऽन्यत्रापि यल्लक्ष्यं तदप्यन्तर्भवं पदम्॥२॥

### मनोरमा

समृद्धि इत्येवमादिषु शब्देष्वादेरकारस्याऽऽकारो भवति वा। समिद्धी,

सामिद्धी, पअड़ं, पाअडं, अहिजाई, आहिजाई, मणंसणी, माणंसणी, पड़िवआ, पाड़िवआ, सरिच्छं, सारिच्छं, पडिसिद्धी पाड़िसिद्धी, पसुत्तं पासुत्तं, पसिद्धि, पासिद्धि, अस्सो, आसो॥ समृद्धि-प्रकटाभिजाति मनस्विनी प्रतिपदा सदृक्ष-प्रतिषिद्धि प्रसुप्त प्रसिद्ध्यश्वाः॥ आकृतिगणोऽयम्॥

**अम्बिका**

"आदेरतः" (प्रा. १.१) इत्यतः "आदेः" तथा "अतः" इति पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

"समृद्धि" आदि संस्कृत शब्देषु आदौ विद्यमान ह्रस्व 'अ' कारस्य स्थाने विकल्पेन दीर्घ "आ" कारः भवति। प्रकटम्, अभिजाति, मनस्विनी, प्रतिपदा, सदृक्षम्, प्रतिसिद्धिः, प्रसुप्तम्, प्रसिद्धि तथा अश्वादि शब्द ग्रहण निमित्तं सूत्रे "आदि" शब्दस्य ग्रहणम्।

**समृद्धि > सामिद्धी, समिद्धी**

"समृद्धि" इति स्थिते "इदृष्यादिषु" (प्रा. १.२८) इत्यनेन सूत्रेण 'ऋ' कारस्य 'इ' कारे 'समिद्धि' इति जाते, उपरिलोप कगडतदपषसाम्" (प्रा. ३.१) इत्यनेन सूत्रेण 'द्' कारस्य लोपे 'समिधि' इति जाते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'ध' इत्यस्य द्वित्वे 'समिध्धि' इति जाते, "वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इत्यनेन सूत्रेण 'ध्' कारस्य 'द्' कारे 'समिद्धि' इति जाते "सुभिसुप्सुदीर्घः (प्रा. ५. १८) इत्यनेन सूत्रेण 'इ' कारस्य दीर्घे "आ समृद्ध्यादिषु वा" (प्रा. १.२) इत्यनेन सूत्रेण आदि 'अ' कारस्य विकल्पेन "आ" कारे "सामिद्धी" तथा विकल्पाभावे "समिद्धी" इति रूपं सिद्धम्।

**प्रकटम् > पाअडं पअड़ं**

"प्रकटम्" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र' कारस्य लोपे, "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' कारस्य लोपे "पअट" इति स्थिते "टोडः (प्रा. २.२०) इत्यनेन सूत्रेण 'ट्' कारस्य 'ड्' कारे, "सोविन्दुनपुसंके" (प्रा. ५.

३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) 'पअडं इति जाते "आ समृद्ध्यादिषु वा" (प्रा. १.२) इत्यनेन सूत्रेण आदि 'अ' कारस्य विकल्पेन "आ" कारे "पाअडं" इति रूपं सिद्धम्।

## अभिजाति > अहिजाई, आहिजाई

"अभिजाति" इति स्थिते "खघथधभां हः" (प्रा. २.२७ इत्यनेन सूत्रेण "भ्" इत्यस्य "ह्" कारे "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'त्' इत्यस्य लोपे "अहिजाइ" इति स्थिते, "सुभिसुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण 'इ' कारस्य "ई" कारे "अहिजाई तथा "आ समृद्ध्यादिषु वा" (प्रा १.२) इत्यनेन सूत्रेण आदि "अ" कारस्य दीर्घत्वे (आ) विकल्पेन "आहिजाई" इति रूपं सिद्धम्।

## मनस्विनी > मणंसिणी, माणंसिणी

"मनस्विनी" इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण "न्" कारस्य 'ण्' कारे, "वक्रादिषु" (प्रा. ४.१५) इत्यनेन सूत्रेण बिन्दुरागमे "मणंस्विनी" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण "व्" कारस्य लोपे, "मणंसिनी" इति स्थिते पुनः "नोणः सर्वत्र" (प्रा. २.४२) इति सूत्रेण "मणंसिणी" इति रूपं तथा च "आ समृद्ध्यादिषु वा" (प्रा. १.२) इत्यनेन सूत्रेण 'आदि' 'अ' कारस्य (दिर्घत्वे) आ कारे विकल्पेन "माणंसिणी" इति रूपं सिद्धम्।

## प्रतिपदा > पड़िवआ, पाड़िवआ

'प्रतिपदा' इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे, "पतिपदा' इति स्थिते "पोवः (प्रा. २.१५) इत्यनेन सूत्रेण अनादि 'प्' कारस्य 'व्' कारे 'पतिवदा' इति जाते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "द्" कारस्य लोपे "पतिवआ" इति जाते "प्रतिसरवेतसपताकासु डः" (प्रा. २. ८) इत्यनेन "त्" कारस्य 'ड्' कारे "पडिवआ इति रूपं प्राप्ते, आ समृद्ध्यादिषु वा" (प्रा १.२) इति विकल्प सूत्रेण आदि 'अ' कारस्य

"आ" कारे (दीर्घत्वे) "पाड़िवआ" इतिरूपं सिद्धम्।

## सदृक्षम् > सरिच्छं, सारिच्छं

"सदृक्षम्" इति स्थिते "क्वचियुक्तस्यापि" (प्रा. १.३१) इत्यनेन सूत्रेण, 'ऋ' कारस्य 'रिकारे सद्रिक्ष इति स्थिते, "कगचजतदपयवां प्रायो लोपः इत्यनेन "द्" कारस्य लोपे "सरिक्ष" इति स्थिते "अक्ष्यादिषुच्छः" (प्रा. ३.३०) इति सूत्रेण "क्ष्" इत्यस्य "छ्" कारे "सरिछ" इति जाते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "छ्" इत्यस्य द्वित्वे "सरिछ्छ" इति जाते, "वर्गेषु युजः पूर्वः (प्रा. ३.५१) इत्यनेन सूत्रेण "छ्" कारस्य "च्" कारे, "सरिच्छ" इति जाते आ समृद्ध्यादिषु वा" (प्रा. १.२) इति सूत्रेण "आदि-अ" कारस्य विकल्पेन आ' कारे "सो बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) सरिच्छं, सारिच्छं इति रुपद्वयं सिद्धम्।

## प्रतिषिद्धिः > पड़िसिद्धी, पाड़िसिद्धी

"प्रतिषिद्धि" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे, "पतिषिद्धि" इति स्थिते, "शषोः सः (प्रा. २.४३) इत्यनेन सूत्रेण 'ष्' कारस्य 'स्' कारे "पतिसिद्धि" इति जाते, "उपरि लोप कगडतदपषसाम्" (प्रा. ३.१) इत्यनेन सूत्रेण 'द्' कारस्य लोपे, "पतिसिधि" इति जाते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'ध्' कारस्य द्वित्वे "पतिसिध्धि" इति जाते, वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इत्यनेन सूत्रेण पूर्व 'ध्' कारस्य 'द्' कारे, "पतिसिद्धि" इति जाते, "प्रतिसरवेतसपताकासुड़ः" (प्रा. २.८) इत्यनेन सूत्रेण 'त्' कारस्य "ड्" कारे, "पड़िसिद्धि" इति जाते, "सुभिसुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण इदन्तस्य दीर्घे "पड़िसिद्धी" तथा "आ समृद्ध्यादिषु वा" (प्रा. १. २) इत्यनेन सूत्रेण 'आदिअकारस्य दीर्घे पाड़िसिद्धी, इति रूपद्वयं सिद्धम्।

## प्रसुप्तम् > पसुत्तं पासुत्तं

प्रसुप्तम् इति स्थिते, "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लापे, "उपरि लोप कगडतदपषसाम्" (प्रा ३.१) इत्यनेन

सूत्रेण "प्" इत्यस्य लोपे, "पसुत" इति जाते, शेषादेशयोर्द्वित्वमनादौ (प्रा. ३.५०) इत्यनेन सूत्रेण 'त्' कारस्य द्वित्वे, "पसुत्त" इति जाते, "सोर्बिन्दुर्नपुंसके" (प्रा. ५.३०) इति सूत्रेण "नपुंसके सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "पसुत्तं" तथा "आ समृद्ध्यादिषु वा" (प्रा. १. २) इति सूत्रेण "आदि-अ" कारस्य विकल्पेन 'आ' कारे, (दीर्घे वा) "पासुत्तं" रूपद्वयं सिद्धम्।

### प्रसिद्धि > पसिद्धी, पासिद्धी

"प्रसिद्धी" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे "पसिद्धि" इति स्थिते "उपरि लोपः कगडतदपषसाम्" (प्रा. ३.१) इत्यनेन सूत्रेण 'द्' कारस्य लोपे "पसिधि" इति स्थिते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "ध्" इत्यस्य द्वित्वे "पसिध्धि" इति स्थिते "वर्गेषु युजः पूर्वः (प्रा. ३.५१) इत्यनेन "ध्" कारस्य 'द्' कारे "पसिद्धि" इति स्थिते "सुभिसुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण इदन्तस्य दीर्घे "पसिद्धी" इति जाते "आ समृद्ध्यादिषु वा" (प्रा. १.२) इत्यनेन सूत्रेण 'आदि-अ' कारस्य विकल्पेन "आकारे" (दीर्घत्वे) 'पासिद्धी' इति रूपद्वयं सिद्धम्।

### अश्वः > अस्सो, आस्सो

"अश्व" इति स्थिते सर्वत्र लवराम्" (प्रा. ३.३) इति सूत्रेण 'व्' इत्यस्य लोपे "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' इत्यस्य 'स्' कारे 'अस' इति स्थिते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इति सूत्रेण 'स्' इत्यस्य द्वित्वे, "अस्स" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इति सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य ओत्वे "अस्सो" इति प्राप्ते "आ समृद्ध्यादिषु वा" (प्रा. १.२) इति सूत्रेण "आदि अ" कारस्य विकल्पेन दीर्घत्वे "अस्सो" इति रूपं सिद्धम्। "अस्स" शब्द शौरसेनी प्राकृते सर्वदा लभ्यते। (रिचर्डपिशल "प्राकृतभाषाओं का व्याकरण" पृ. ५६५७ (ग्रामातिक देर प्राकृतस्प्रारवेन, डॉ. हेमचन्द्र जोशी कृत "हिन्दी अनुवाद, विहार राष्ट्रभाषा परिषद् पटना)।

**समन्वयः**

कतिपयैः विद्वद्भिः विचार्यते यत् ''समृद्ध्यादिगणे'' अश्व शब्दस्य पाठं तु न वर्त्तते, अतः भामह आचार्येण अस्य प्रसङ्गस्य उल्लेखनम् चिन्तनीयम्, प्राकृतप्रकाशस्य चन्द्रिका व्याख्यायाम् अस्मिन् सूत्र प्रसङ्गे उक्तम् यत् ''समृद्ध्यादिगणोक्तः अश्व शब्द पाठस्तु चिन्त्य एव''।

**३. इदीषत्पक्वस्वप्नवेतसव्यजनमृदाग्ङाऽग्ङारेषु (च)**

**सुबोधिनी**

ईषदादिषु शब्देष्वादेरत इकारादेशः स्यात्।

इसि। सिविणो। पिक्कं। बेडिसो। बिअणं। मुइंगो। इंगालो। अग्ङारशब्दः संस्कृतसमोऽपि कचित्। चकारान्मध्यगतस्याप्यकारस्येत्वं क्वचित्। यथा मज्झिमं, मध्यमम्। चरिमं, चरमम्। संस्कृतसमोऽपि क्वचित् ॥3॥

**सञ्जीवनी**

ईषदित्यादिषु सप्तसु शब्देष्वादेरतः स्थाने इद् भवति। तकार उच्चारणार्थः चकरादनादेरपि। ईसि, ईषत्। सुप्रत्यये कृते अन्त्यस्य हलः इति प्रत्येकं सुतकारयोर्लोपः। पिक्कं, पक्वम्। सर्वत्र लवरामिति वलोपः। शेषादेशयोरित्यादिना ककारस्य द्वित्वम्। सिविणो, स्वप्नः। पूर्ववत् लोपः। आदेरस्य इत्वम्। श्रीही इत्यादिना पवयोर्विकर्षः। पूर्वस्य इकारः। पो वः इति वः। नो णः इति णः। अत ओ सोः इत्योत्वम्। वेडिसो, वेतसः। प्रतिसरवेतसेत्यादिना तस्य डः। मध्ये अस्येत्त्वम्। विअणअं, व्यजनकम्। अधो मनयाम् इति यलोपः। स्वार्थे को वा इति कप्रत्ययः। जस्य कगचादिना लोपः। मुइंगो, मृदङ्गः। उदृत्वादिषु इति ऋकारस्य उत्त्वम्। दलोपावशिष्टस्य अकारस्येत्त्वम्। नङोर्हलीति ङः स्थाने बिन्दुः। तस्य कपि तद्वर्गान्त इति वा ङत्वम्। इंगालो, अङ्गारः। हरिद्रादीनां रो लः इति लः। पूर्वदन्यत्। अङ्गारशब्दः संस्कृतसमोऽपीति केचित्।

चकरान्मध्यतोऽस्येत्त्वं मध्यमे चरमे तथा।

मज्झिमं, मध्यमम्। ध्यह्मयोर्झः इति ध्यस्य झः। तस्य द्वित्वे वर्गे युजः पूर्वः इति जः। चरिमं, चरम्। चरमशब्दः संस्कृतसमोऽपि केचित्॥३॥

**प्राकृतमञ्जरी**

> ईषत् पक्वं तथा स्वप्नो वेतसो व्यजनं पुनः।
> मृदङ्गश्च तथाङ्गार एषु शब्देषु सप्तसु॥
> अत इद्वा भवेदीषदीसि वा पुनरीस वा।
> पक्कं पिक्कं च पक्कं च तथान्येष्वपि दृश्यताम्॥
> इत्वमीषत्पदे कैश्चिदीकारस्यापि चेष्यते।
> इसि चुम्बिअमित्यादि रूपं तेन हि सिध्यति॥३॥

**मनोरमा**

ईषदादिषु शब्देषु आदेरतः स्थाने इकारादेशो भवति। वेति निवृत्तम् इसि, पिक्कं, सिविणो, वेड़िसो, वअणो, मिइङ्गो, इङ्गालो।

**अम्बिका**

"आदेरतः "(प्रा. १.१) इत्यतः "आदेः" तथा "अतः" शब्द द्वयमनुवर्त्तते, तथा सूत्रस्थ "च" पदेन "अनादि" इत्यस्यापि ग्रहणं स्पष्टम्।

**सूत्रार्थः**

ईषत्, पक्वम्, स्वप्नः, वेतसः, व्यजनकम्, मृदङ्गः, तथा अङ्गारः आदि संस्कृत शब्दानाम् आदि-अकारः तथा कतिपयस्थानेषु अनादि (मध्य) "ह्रस्व-अ" कारस्य स्थाने प्राकृते 'इत् अर्थात् ह्रस्व "इ" कारः आदिश्यते।

**ईषत् > इसि**

'ईषत्' इति स्थिते "शषोः सः" (प्रो. २.४३) इत्यनेन सूत्रेण 'ष्' कारस्य 'स्' कारे ईसत् इति जाते "अन्त्य हलः" (प्रा. ४.६) इत्यनेन सूत्रेण अन्त्य हल् 'त्' इत्यस्य लोपे 'ईस' इति स्थिते "इदीषत्पक्वस्वप्नवेतसव्यजनमृदाङ्गाऽङ्गारेषु" (च) (प्रा. १.३) इत्यनेन सूत्रेण "अ" कारस्य 'इ' कारे "इसि" इति रूपं सिद्धम्।

### पक्वम् > पिक्कं

"पक्वम्" इति स्थिते, "सर्वत्र लवराम्" (प्रा. ३.३) इति सूत्रेण 'व्' इत्यस्य लोपे "पक्म इति स्थिते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "क्" इत्यस्य द्वित्वे "पक्कं" इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "पक्कं" इति जाते "इदीषत्पक्वस्वप्नवेतसव्यजन मृदाङ्गाऽङ्गारेषु" (प्रा. १.३) इत्यनेन सूत्रेण "आदि-अ कारस्य 'इ' कारे "पिक्कं" इति रूपं सिद्धम्।

### स्वप्नः > सिविणो

"स्वप्न" इति स्थते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण "व्" कारस्य लोपे "सप्न" इति स्थिते "इः (त्) "श्रीहीक्रीतक्लान्तक्लेशम्लानस्वप्नस्पर्शहर्षार्हगर्हेषु" (प्रा. ३.६२) इत्यनेन सूत्रेण युक्तस्य विप्रकर्षः तथा पूर्वस्य 'इ' कारः, तत्स्वरता च इति नियमेन 'प्' इत्यस्य 'इ' कारे "सपिन" इति स्थिते, "पोवः" (प्रा. २.१५) इत्यनेन सूत्रेण "प्" इत्यस्य 'व्' कारे 'सविन' इति जाते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण "न्" कारस्य "ण्" कारे "सविण" इति स्थिते, "इदीषत्पक्वस्वप्नवेतसव्यंजनमृदङ्गाऽङ्गारेषु (च)" (प्रा. १.३) इत्यनेन सूत्रेण आदि 'अ' कारस्य "इ" कारे "सिविण" इति प्राप्ते "अत ओत् सोः" (प्रा ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने "सु" इत्यस्य ओ कारे "सिविणो" इति रूपं सिद्धम्।

### वेतसः > वेड़िसो

"वेतस" इति स्थिते "प्रतिसरवेतसपताकासु डः" (प्रा. २.८) इत्यनेन सूत्रेण "त्" कारस्य 'ड्' कारे "वेड़स" इति जाते "इदीषत्पक्वस्वप्न-वेतसव्यजन मृदङ्गाऽङ्गारेषु (च)" (प्रा. १.३) इत्यनेन सूत्रेण अनादि अ" कारस्य 'इ' कारे "वेड़िस" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओ" कारे "वेड़िसो इति रूपं सिद्धम्।

## व्यजनकम् > विअणअ

“व्यजनकम् इति स्थिते “अधोमनयाम्” (प्रा. ३.२) इति सूत्रेण ‘य्’ कारस्य लोपे “वजनक” इति प्राप्ते “कगचजतदपयवां प्रायो लोपः (प्रा. २.२) इति सूत्रेण ‘ज्’ कारस्य लोपे “वअनक” इति स्थिते पुनः “कगचजतदपयवां प्रायो लोपः” (प्रा. २.२) इत्यनेन सूत्रेण “क्” इत्यस्य लोपे “वअनअ इति प्राप्ते “नोणः सर्वत्र” (प्रा. २.४२) इत्यनेन सूत्रेण ‘न्’ कारस्य ‘ण्’ कारे “वअणअ” इति प्राप्ते “इदीषत्पक्वस्वप्नवेतस व्यजनमृदङ्गाङ्गारेषु (च) (प्रा. १.३) इति सूत्रेण “आदि अ” कारस्य ‘इ’ कारे “विअणअ” इति रूपं सिद्धम्।

## मृदङ्ग > मिइङ्गो

“मृदङ्गः” इति स्थिते “इदृष्यादिषु” (प्रा. १.२८) इत्यनेन सूत्रेण ‘ऋ’ कारस्य ‘इ’ कारे मिदङ्ग” इति जाते “कगचजतदपयवां प्रायो लोपः (प्रा. २.२) इत्यनेन सूत्रेण ‘द्’ कारस्य लोपे “मिअङ्ग” इति प्राप्ते “इदीषत्पक्वस्वप्नवेतसव्यजनमृदङ्गाङ्गारेषु (च)” (प्रा. १.३) इति सूत्रेण (अनादिस्थ) अ’ कारस्य ‘इ’ कारे “मिइङ्ग इति जाते “ययि तदवर्गान्तः” (प्रा. ४.१७) इति सूत्रेण “बिन्दुरागमस्य विकल्पपक्षे “मिइङ्ग” इति स्थिते “अत ओत् सोः” (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने ‘सु’ इत्यस्य “ओ” कारे “मिइङ्गो” इति रूपं सिद्धम्।

## अङ्गारः > इङ्गालो

“अङ्गारः” इति स्थिते “इदीषत्पक्वस्वप्नवेतसव्यजनमृदङ्गाङ्गारेषु च” (प्रा. १.३) इत्यनेन सूत्रेण “आदि-अ”कारस्य ‘इ’ कारे “इङ्गार” इति स्थिते “हरिद्रादीनां रोलः” (प्रा. २.३०) इति सूत्रेण ‘र्’ इत्यस्य ‘ल्’ कारे “इङ्गाल” इति स्थिते “ययि तदवर्गान्त” (प्रा. ४.१७) इति सूत्रेण ययि परे अनुस्वारस्य वर्गस्थ पञ्चम वर्णस्य विकल्प उपस्थिति त्वात् “इङ्गाल इति स्थिते “अत ओत सोः” (प्रो. ५.१) इति सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने “सु” इत्यस्य “ओ” त्वे “इङ्गालो” इति रूपं सिद्धम्।

**समन्वयः**

"मनोरमा व्यख्याकारः भामहेन प्रस्तुत सूत्रे 'च' कारस्य उपादानं न कृतम्। परन्तु 'च' कारस्य उपादानं विना अनादिस्थ 'अ' कारस्य स्थाने "इ" कारादेशः असम्भवम्। अतः "चन्द्रिका" तथा दीप्ति" व्याख्यायोः 'च' कारस्य उपादामाधारीकृत्य अत्र "अम्विकायाम्" अपि 'च' उपादानेन "अनादिस्थ अ" कारस्य ग्रहणं स्पष्टम्।

कतिपयैः व्याख्याकारैः "ईषत्" शब्दस्य 'ई' कारः ह्स्व 'इ' कारे स्वीकृतम्। परन्तु हेमचन्द्रेण "ईसि" रूपं तु स्वीक्रियते। कालिदासोऽपि स्वकीय नाटके "ईसि" शब्दस्य प्रयोगं कृतम्।

**"ईसीसि चुम्विआइं भमरेहिं सुउमारकेसरसितांर।**

**ओदंसयन्ति दअमाणा पमदाओ सिरीसकुसुमाइं॥**

**(शकुन्तला, प्रथमअंक)**

प्राकृतभाषायाः "इङ्गाल" शब्दः कालान्तरे संस्कृत साहित्ये अपि उपलभ्यते। कविश्रीहर्षेण स्वरचित महाकाव्ये "अंगार" शब्दस्य स्थाने "इङ्गाल" प्रयुज्यते।

**"स्फुंरद्धनुनिंस्वनतद्घनाशुगप्रगल्भ वृष्टि व्ययितस्य संगरे।**

**निजस्य तेजः शिश्विनः परश्शता वितेनुरिङ्गाल मिवायशः परे॥**

**(नैषध चरित, प्रथमसर्ग, श्लोक - ९)**

**४. लोपोऽरण्ये**

**सुबोधिनी**

**अरण्यशब्दे आदेरतो लोपो भवति। रण्णं।**

**स्यादिदानींपदे लोप आदेर्योगविभागतः। दाणिं॥४॥**

**सञ्जीवनी**

अरण्यशब्दे अकारस्य लोपो भवति। रण्णं, अरण्यम्। अधो मनयाम् इति यलोपः शेषादेशादिना द्वित्वम्। 'स्यादिदानींपदे लोपः आदेर्योगविभागतः'। दाणि, इदानीम्। इतीतः पानीयादिषु इतीत्त्वम्। मो बिन्दुः इत्यादिना बिन्दुः। तस्य मांसादित्वाल्लोपः॥४॥

**प्राकृतमञ्जरी**

**अरण्यमिति शब्देऽस्मिन्नकारस्यादिवर्त्तिनः।**

**अविकल्पेन लोपः स्यात्ततो 'रणं' भवेदिदम्॥४॥**

**मनोरमा**

अरण्य शब्दे आदेरतो लोपो भवति, रण्णं।

**अम्बिका**

प्रथम सूत्रं "आदेरतः" (प्रा. १.१) इत्यतः 'आदेः' तथा 'अतः' इति द्वौ शब्दौ अनुवर्तेते।

**सूत्रार्थः-**

"अरण्यम्" इति संस्कृत शब्दस्य आदौ विद्यमानौ ह्रस्व "अ" कारस्य प्राकृते लोपः भवति।

**अरण्यम् > रण्णं**

"अरण्यम्" इति स्थिते "लोपेऽरण्ये" (१.४) सूत्रेण 'अ' कारस्य लोपे "रण्य" इति स्थिते "अधो मनयाम्" (प्रा. ३.२) इत्यनेन सूत्रेण 'य्' कारस्य लोपे 'रण' इति स्थिते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इति सूत्रेण 'ण्' कारस्य द्वित्वे "रणण" इति जाते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "रण्णं" इति रूपं सिद्धम्।

५. ए शय्यादिषु (च)

सुबोधिनी

आदेरत एत्वं स्यात्।

शय्यासौन्दर्यपर्यन्तबल्लीतितामितो (त्रित्तिआन्तो ?) त्कराः।

आश्चर्यमात्रवृन्तानि ज्ञेयः शय्यादिरीदृशः।

सेजा, सुन्दरो, वेल्ली केत्तिअं, जेत्तिअं, तेत्तिअं। अमी किंयत्तच्छब्दानां परिणामाः। उक्केरं, अच्छेरं। मात्रवृन्तशब्दयोरदातो यथादिषु ऋतोऽदिति सूत्राभ्यां कृताकारयोर्ग्रहणम्। थोअमेत्तं, वेण्ठं॥५॥

**सञ्जीवनी**

शय्याशब्देन सदृशाः शय्यादयः। तेषु शय्यादिषु आदेरकारस्य एकारादेशो भवति। चकारादनादेरपि। सेजा शय्या। आदेरकारस्यैत्वम्। र्यशय्याभिमन्युषु जः इति य इत्यस्य जः। शेषादेशादिना जस्य द्वित्वम्। सुंदेरं, सौन्दर्य्यम्। उत्सौन्दर्यादिषु इति औकारस्योत्त्वम्। तूर्यधैर्यादिना र्यस्य रः। बेल्ली, बल्ली। केत्तिअं, कियत्। किं परिमाणमस्य किमो यत्। किंशब्दे किमः। कः इति कः। जेत्तियं, यावत्। यच्छब्दे अन्त्यस्य हलः इति तलोपः। आदेर्यो जः इति जः। तेत्तिअं, तावत्। तच्छब्देऽपि पूर्ववत् तलोपः। 'इष्टौ किंयत्तदेतेभ्यः परिमाणे त्तिअड्डहौ इति त्रिभ्योऽपि त्तिअप्रत्ययः। त्रयोमी, त्तिआन्ताः। उक्करो, उत्करः। उपरि लोपः इत्यादिना तलोपः। शेषादिना कस्य द्वित्वम्। मध्यस्यैत्वम्। अच्छेरं, आश्चर्यम्। अदातो यथादिषु वा इत्यत्त्वम्। श्चत्सप्सां छः इति श्चस्य छः। तस्य द्वित्वे वर्गे युजः पूर्वः इति चः। तूर्यधैर्यादिनांर्यस्य रः। थोअमेत्तं, स्तोकमात्रम्। स्तस्य थः। कगचादिना कलोपः। अदातो यथादिषु वा इत्यम्। वेण्टं, वृन्तम्। ऋतोऽदित्यत्त्वे कृते एत्वम्। तालवृन्ते ण्टः इत्यत्र केवलवृन्तशब्दे ण्ट इति वक्ष्यते।

**शय्यासौन्दर्यपर्यन्तवल्लीत्रित्तिआन्तोत्कराः।**

**आश्चर्यमात्रवृन्तानि शय्यादयः स्युरीदृशाः॥५॥**

प्राकृतमञ्जरी

शय्यादिषु भवेदेत्वं शय्या सेज्जा निगद्यते।

आश्चर्यं विदुरच्छेरं त्रयोदश च तेरह॥

शय्या त्रयोदशाश्चर्यपर्यन्तोत्करवल्लयः।

सौन्दर्यञ्चेति शय्यादिगणः शेषस्तु पूर्ववत्॥५॥

मनोरमा

शय्या इत्येवमादिषु शब्देषु आदेरतः एकारादेशो भवति। सेज्जा सुन्देरं, उक्केरो, तेरहो, अच्छेरं, पेरन्तं, वेल्ली॥ शय्या - सौन्दर्योत्कर त्रयोदशाश्चर्य-पर्यन्त वल्ल्यः॥

## अम्बिका

"आदेरतः" इति अधिकार-सूत्रतः (प्रा. १.१) "आदेः" तथा "अतः" पदद्वयमनुवर्त्तते। "च" कारस्य उपादानेन आदि तथा अनादि एतयोः ग्रहणं इति तात्पर्यम्।

## सूत्रार्थः

शय्या आदि (सौन्दर्यम्, उत्करः त्रयोदशः, आश्चर्यम्, पर्यन्तम्, वल्ली) संस्कृत शब्देषु तथा कदाचित् अनादौ विद्यमानस्य ह्रस्व-अ कारस्य स्थाने 'ए' कारादेशः भवति।

**यथा–**

### शय्या > सेज्जा

"शय्या" इति स्थिते "शषोः सः" (प्रा. २.४३) इति सूत्रेण "श" कारस्य "स" कारे, "र्यशय्याभिमन्युषु जः" (प्रा. ३.१७) इत्यनेन सूत्रेण "शय्या" शब्दस्य "य्य्" इति युक्तस्य "ज्" भवति। "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इति सूत्रेण "ज्" इत्यस्य द्वित्वे, "ए शय्यादिषु" इति सूत्रेण आदि "अ" कारस्य 'ए' कारे "सेज्जा" इति रूपं सिद्धम्।

### सौन्दर्यम् > सुन्देरं

"सौन्दर्यम्" इति स्थिते "उत्सौन्दयादिषु (प्रा. २.८८) इति सूत्रेण "सौन्दर्यम्" शब्दस्य आदि औ कारस्य स्थाने 'उ' कारे, "यथि तदवर्गान्तः" (प्रा. ४.१७) इति सूत्रेण ययि परे विकल्पेन बिन्दुः (अनुस्वारं), तदवर्गान्तत्वात् "सुन्दर्यम्" इति प्राप्ते "तूर्यधैर्यसौन्दर्याश्चर्यपर्यन्तेषु रः" (प्रा. ३.१८) इति सूत्रेण 'र्य' इत्यस्य 'र्' कारे "सुन्दरम्" इति स्थिते "ए शय्यादिषु" (प्रा. १.५) सूत्रेण 'अ' कारस्य (मध्य-अ) स्थाने 'ए' कारे "सुन्देरम्" इति जाते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "सुन्देरं इति सिद्धम्।

### उत्करः > उक्केरो

"उत्कर" इति स्थिते "उपरि लोप कगडतदपषसाम्" (प्रा. ३. १) इति सूत्रेण 'त्' कारस्य लोपे, "शेषादेशयोर्द्वित्वमनादौ (प्रा. ३.

५०) इति सूत्रेण "क्" कारस्य द्वित्वे "उक्कर इति स्थिते "ए शय्यादिषु" (प्रा. १.५) इति सूत्रेण 'अ' कारस्य (मध्य-अ) स्थाने 'ए' कारे "उक्केर" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इन्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओ" कारे "उक्केरो" इति रूपं सिद्धम्"।

## त्रयोदशः > तेरहो

"त्रयोदशः" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इति सूत्रेण 'र्' इत्यस्य लोपे "तयोदश" इति स्थिते, "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'य्' कारस्य लोपे "तओदश" इति स्थिते "संन्धावचामज्लोपविशेषाबहुलम्" (प्रा. ४.१) इति सूत्रेण अचां सन्धौ कर्त्तव्ये अचविशेषो लोप विशेषश्च बहुलं स्यात्, इति नियमेन अच् "ओ" कारस्य लोपे "तदश" 'इति स्थिते, "संख्यायाञ्च" (प्रा. २.१७) इति सूत्रेण संख्यावाचिनि शब्दे अयुक्तस्यानादौ 'द्' कारस्य रेफादेशे "तरश" इति स्थिते "दशादिषु हः" (प्रा. २.४४) इति सूत्रेण 'श्' कारस्य 'ह्' कारे, "तरह" इति स्थिते "ए शय्यादिषु" (प्रा. १.५) इति सूत्रेण "आदि-अ" कारस्य 'ए' कारे, तेरह" इतिप्राप्ते "अत ओत् सोः" (प्रा. ५.१) इति सूत्रेण अदन्तस्य प्रथमाविमक्ति एकवचने 'सु' इत्यस्य "ओ" कारे "तेरहो" रूपं सिद्धम्'

## आश्चर्यम् > अच्छेरं

"आश्चर्यम्" इति स्थिते 'सन्धावचामज्लोपविशेषावहुलम'्' (प्रा. ४.१) इति सूत्रेण स्वराणाम् विशेषत्वात् आ-कारस्य अ कारे "अश्चर्य" इति स्थिते "श्चत्सप्सां छः" (प्रा. ३.४०) इति सूत्रेण संयुक्त व्यञ्जन समुदाय "श्च्" इत्यस्य "छ्" कारे, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इति सूत्रेण आदेशस्य द्वित्वे अर्थात् 'छ्' इत्यस्य द्वित्वे "अछ्छर्य" इति प्राप्ते "वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इति सूत्रेण 'छ्' इत्यस्य "च्" कारे "अच्छर्य" इति जाते "तूर्यधैर्य सौन्दयर्याश्चर्यपर्यन्तेषु रः" (प्रा. ३.१८) इति सूत्रेणे 'र्य्' इत्यस्य 'र्' कारे "अच्छर" इति स्थिते "ए शय्ययादिषु" (प्रा. १.५) इति सूत्रेण, सूत्रे 'च' कारस्य उपादान त्वात् अनादि 'अ' कारस्य 'ए' कारे "अच्छेर" इति स्थिते

"सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "अच्छेरं" इति रूपं सिद्धम्।

### पर्यन्तम् > परेन्तं

'पर्यन्तम्' इति स्थिते "तूर्यधैर्यसौन्दर्याश्चर्यपर्यन्तेषु रः" (प्रा. ३. १८) इति सूत्रेण 'र्य्' इत्यस्य 'र्' कारे "परन्त" इति जाते "ए शय्यादिषु" (प्रा. १.५) इति सूत्रेण आदि 'अ' कारस्य ए' कारे पेरन्त इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके सु इत्यस्य बिन्दुत्वे "पेरन्तं" इति रूपं सिद्धम्'।

### वल्ली > वेल्ली

"वल्ली" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इति सूत्रेण 'ल्' कारस्य लोपे' "शेषादेशयोर्दित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'ल्' इत्यस्य द्वित्वे "वल्ली" इति स्थिते "ए शय्यादिषु" (प्रा. १. ५) इत्यनेन सूत्रेण आदि 'अ' कारस्य 'ए' कारे "वेल्ली" इति रूपं सिद्धम्।

**समन्वयः**

प्राकृत वैयाकरणकारः पण्डितप्रवरः भामह आचार्यस्य दृष्ट्या, सूत्रे 'च' पदस्य ग्रहणं अनावश्यकम्, परन्तु 'च' पदस्य उपदानं विना "अच्छेरं" आदि शब्दसिद्धिमसम्भवम्। अतः चन्द्रिका कारेण तथा अत्रापि "च" पदमाधारिकृत्वा अनादिस्थ ह्रस्व 'अ' कारस्य ग्रहणं यथार्थं इति वेदितव्यम्।

## ६. ओ बदरे देन

## सुबोधिनी

बदरे शब्दे दकारेण सह ओत्त्वं स्यात्। बोरं।
ओत्वं सह वकारेण लवणेऽप्यस्य चेष्यते। लोणं।
आदेरोत्वं विकल्पेन स्यादार्द्रार्पितशब्दयोः।
ओल्लं, अल्लं; ओद्दं, अद्दं। ओप्पिअं, अप्पिअं॥६॥

**सञ्जीवनी**

बदरशब्दे दकारेण सहादेरत ओत्वं भवति। बोरं, बदरम्। नपुंसके सोर्बिन्दुः इति बिन्दुः। 'ओत्वं सह वकारेण लवणेऽप्यस्य चेष्यते'। लोणं, लवणम्। 'ओदेरोत्वं विकल्पेन स्यादार्द्रापितशब्दयोः'। ओल्लं, अल्लं; अद्दं, आर्द्रम्। यत्र पक्षे ओत्वं नास्ति तत्र अदातो यथादिषु वा इत्यत्वम्। द्रे रो वा इति रेफलोपः। 'आर्द्रशब्दे दकारस्य लादेशो वेष्यते बुधैः' इति वा लत्वम्। पक्षे सर्वत्र लवरामिति रलोपः। शेषादेशादिना द्वित्वम्। ओप्पिअं, अप्पिअं, अर्पितम्। लोपे द्वित्व पूर्ववत्॥ ६॥

**प्राकृतमञ्जरी**

**आदेर्बदरशब्देऽस्मिन्नत ओत्वं विधीयते।**
**दकारेण सहैवातो बदरं वोरमुच्यते॥ ६॥**

**मनोरमा**

वदर शब्दे दकारेण सहादेरत ओत्वं भवति।

**अम्बिका**

प्रथमसूत्रं "आदेरतः" (प्रा. १.१) इत्यतः "आदेः" तथा "अतः" इति पददवयमनुवर्त्तते।

**सूत्रार्थः**

संस्कृत बदरशब्द स्य "आदि–अकारः मध्यस्थ 'द' कारसहितेन प्राकृते "ओ" कारः भवति।

**बदरम् > बोरं**

"बदरम्" इति स्थिते' "ओ बदरे देन" (प्रा. १.६) इति सूत्रेण "आदिअ कारेण सह 'द' कारस्य "ओत्वे", बोर" इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "बोरं" इति रूपं सिद्धम्।

**समन्वयः**

'द' कारस्य तात्पर्यम् तु न केवलम् "द्" इति व्यञ्जन वर्णः, परन्तु "द्" इति व्यञ्जनेन सह तदुत्तरवर्त्तिनः 'अ' कारस्यापि ग्रहणम्'।

अन्यथा "बोअरं" इति अनभीष्टं रूपं लभ्यते। अतः "लवणनवमल्लिकयोर्वेन" (प्रा. १.७) इति सूत्रे 'व' कारस्य आशयेन 'व्' तथा तदुत्तरवर्त्तिनः 'अ' कारस्यापि ग्रहणम्।

## ७. लवणनवमल्लिकयोर्वेन

### प्राकृतमञ्जरी

ओकारो वेन लवण-नवमल्लिकयोरतः।
लोणं णोमल्लिएति स्याल्लवणं नवमल्लिका॥७॥

### मनोरमा

लवणनवमल्लिकयोरादेरतो वकारेण सह ओकारः स्यात्। लोणं, णोमल्लिआ।

### अम्बिका

"आदेरतः" (प्रा. १.१) इत्यतः "आदेः" तथा "अतः", ओ बदरे देन" (प्रा. १.६) इत्यस्मात् सूत्रात् "ओ" इति पदानि अनुवर्त्तन्ते।

### सूत्रार्थः

लवणम्, नवमल्लिका इति संस्कृत शब्दयोः आदि 'अ' कारः 'ब' कारेण सह प्राकृते 'ओ' कारः भवति।

**लवणम् > लोणं**

लवणम् इति स्थिते "लवण नवमल्लिकयोर्वेन" (प्रा. १.७) इति सूत्रेण 'आदि-अ' कारस्यस्थाने व कारः सहितेन प्राकृते 'ओ' कारः त्वात् "लोण" इति स्थिते "सोबिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) लोणं" इति रूपं सिद्धम्।

**नवमल्लिका > णोमल्लिआ**

"नवमल्लिका" इति स्थिते "नोणः सर्वत्रः" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' इत्यस्य "ण्" कारे, "णवमल्लिका" इति प्राप्ते "लवणनवमल्लिकयोर्वेन" (प्रा. १.७) इति सूत्रेण "आदि-अ "कारस्य "व" कार सहितेन औ-कारे "णोमल्लिका" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इति सूत्रेण "क्" कारस्य लोपे "णोमल्लिआ" इति रूपं सिद्धम्।

## ८. मयूरमयूखयोर्व्या वा

### सुबोधिनी

मयूरमयूखशब्दयोः यूशब्देन सह आदेरत ओत्त्वं स्याद्वा। मोरो, मऊरो। मोहो, मऊहो॥

### सञ्जीवनी

य्वा इति तृतीयान्तम्। ओ इत्यनुवर्तते उत्तरत्रापि। एतयोः शब्दयोः य्वा यूशब्देन सहादेरत ओत्वं वा भवति। मोरो, मऊरो, मयूरः। अकारयकारयोरेकत्र ओत्वम्। तेन मस्य सस्वरत्वम्। अन्यत्र कगचादिना यलोपः। मोहा, मऊहा, मयूखाः। जस्प्रत्यये कृते खघथादिना खस्य हः। जस्शसोर्लोपः इति जसो लोपः। ततः प्रत्ययलोपपरिभाषया जस्ङस्यांसु दीर्घ इति दीर्घः। पूर्ववदोत्वम्॥ ॥

### प्राकृतमञ्जरी

यूकारेण सहौत्वं स्याद् वा मयूरमयूखयोः।
मोरो मऊरो मोहो वा मऊहो वा मताविमौ॥८॥

### मनोरमा

'मयूर' 'मयूख' इत्येतयोर्यूशब्देन सहादेरतः ओत्वं वा भवति। मोरो, मऊरो मोहो, मऊहो॥

### अम्बिका

"आदेरतः" (प्रा. १.१) इत्यतः "आदेः" तथा "अतः", "ओ वदरे देन" (प्रा. १.६) इत्यतः -"ओ" कारः च एतानि पदानि अनुवर्त्तन्ते।

### सूत्रार्थः

मयूरः मयूखः इति संस्कृत शब्दयोः आदि "अ"-कारः मध्यवर्ती 'यू' वर्णेन सह प्राकृते विकल्पेन "ओ" कारः भवति।

**यथा–**

**मयूरः > मोरो, मऊरो**

"मयूरः" इति स्थिते "मयूरमयूखयोर्व्या वा" (प्रा. १.८) इति सूत्रेण

''आदि-अकारः 'यू' वर्णेन सह ''ओ''कारत्वे विकल्पत्वेन ''मोर'' इति प्राप्ते ''अत्त ओत् स्तोः'' (प्रा. ५.१) इति सूत्रेण अदन्तस्य प्रथमा विमक्ति एकवचने 'सु' इत्यस्य ''ओत्वे'', ''मोरो'' रूपं, सिद्धम्।

'ओ-'कारस्य' अभावपक्षे 'कगचजतदपयवां प्रायो लोपः (प्रा. २. २) इत्यनेन सूत्रेण 'य्' कारस्य लोपे ''मऊरो'' इति रूपं सिद्धम्।

**मयूखः > मोहो, मऊहो**

''मयूखः'' इति स्थिते ''मयूरमयूखयोर्य्वा वा'' (प्रा. १.८) इति सूत्रेण 'आदि-अ' कारस्यस्थाने ''यू'' इति सहितेन, प्राकृते 'ओ'–कार त्वात् मोख' इति जाते ''खघथधभां हः'' (प्रा. २.२७) इति सूत्रेण 'ख्' कारस्य 'ह्' कारे ''मोह'' इति स्थिते, ''अत ओत् सोः'' (प्रा. ५.१) इति सूत्रेण अदन्तस्य 'प्रथमाविमक्ति एकवचने ''सु'' इत्यस्य ''ओत्वे'', ''मोहो'' इति रूपं सिद्धम्।

ओ-कारस्य अमावपक्षे ''कगचजतदपयवां प्रायो लोपः'' (प्रा. २. २) इत्यनेन सूत्रेण ''य्'' कारस्य लोपे ''मऊहो'' इति रूपं सिद्धम्।

**समन्वयः**

सूत्रस्थ 'य्वा', ''यू'' इति वर्णस्य ''तृतीया विभक्ति एकवचनम्। तस्मात् उपरोक्त प्रकारेण अर्थं वेदितव्यम्।

## ९. चतुर्थी चतुर्दश्योस्तुना

### सुबोधिनी

चतुर्थीचतुर्दशीशब्दयोः तुशब्देन सह आदेरत ओत्वं स्याद्वा। चोत्थी, चउत्थी। चोद्दही, चउदही॥८॥

### सञ्जीवनी

तुनेति तृतीयान्तम्। वेत्युनुवर्तते। एतयोः शब्दयोस्तुना तुशब्देन सहादेरत ओत्वं वा भवति। चोत्थी, चउत्थी चतुर्थी। अकारोकारयोरेकत्र ओत्वम्। अन्यत्र कगचादिना तलोपः। चोद्दही, चउद्दही, चतुर्दशी। दशादिषु हः इति शस्य हः। पूर्ववदन्यत्। अन्त्यस्य हलः इति सुलोपः।

**प्राकृतमञ्जरी**

> वा चतुर्थी चतुर्द्दश्योरत ओत्वं तुना सह।
> भवेच्चोत्थो चउत्थी च चोद्दही वा चउद्दही॥९॥

**मनोरमा**

एतयोस्तुना सहादेरत ओत्वं भवति वा। चोत्थी, चउत्थी। चोद्दही, चउद्दही॥

**अम्बिका**

"आदेरतः" (प्रा. १.१) इत्यतः "आदेः" तथा "अतः", ओ वदरे देन" (प्रा. १.६) इत्यतः ओ" कारः, "मयूरमयूखयोर्व्वा वा" (प्रा. १.८) इत्यतः 'वा' इति एतानि पदानि अनुवर्त्तन्ते।

**सूत्रार्थः**

"चतुर्थी" तथा "चतुर्दशी" द्वयोः शब्दयोः आदि-अ" कारस्य मध्यस्थ 'तु' वर्णेन सह प्राकृते विकल्पेन "ओ" कारः भवति।

**यथा–**

**चतुर्थी > चोत्थी, चउत्थी**

चतुर्थी इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इति सूत्रेण 'र' इत्यस्य लोपे, "शेषादेशर्योद्वित्वमनादौ (प्रा. ३.५०) इत्यनेन सूत्रेण 'थ' इत्यस्य द्वित्वे "चतुथ्थी" इति प्राप्ते "वर्गेषु युजः पूर्वः" (प्रा. ३. ५१) इति सूत्रेण "थ्" कारस्य 'त्' कारे "चतुत्थी" इति स्थिते "कगचजतदपयवां प्रायो लोपः (प्रा. २.२) इति सूत्रेण 'तु' इत्यस्य 'त्' कारस्य लोपे "चउत्थी" इति प्राप्ते "चतुर्थी चतुर्दश्योस्तुना" (प्रा. १.९) इति सूत्रेण विकल्पेन 'तु' इत्यनेन सह आदि 'अ' कारस्य ओत्वे "चोत्थी" इति रूपं सिद्धम्।

**चतुर्दशी > चोद्दसी, चउद्दसी, चोदही, चउद्दही,**

चतुर्दशी इति स्थिते, "सर्वत्र लवराम्" (प्रा. ३.३) इति सूत्रेण 'र' इत्यस्य लोपे "चतुदशी" इति स्थिते, "शेषादेशर्योद्वित्वमनादौ" (प्रा. ३.५०) इति सूत्रेण "द" कारस्य द्वित्वे "चतुद्दशी" इति स्थिते,

"कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इति सूत्रेण "त्" इत्यस्य लोपे "चउद्दशी" इति स्थिते "शषोः सः" (प्रा. २.४२) इति सूत्रेण "श्" कारस्य 'स्' कारे "चउद्दसी" इति प्राप्ते "चतुर्थी चतुर्दश्योस्तुना" (प्रा. १.९) इति विकल्प सूत्रेण "आदि-अ" कारस्य स्थाने "मध्यस्थ-तु" सहितेन "ओ-कारे", चोद्दसी' इति रूपं सिद्धम्।

"दशादिषु हः" (प्रा. २.४४) इति सूत्रेण, पक्षे "चउद्दशी" इत्यस्य 'श्' कारस्य 'ह' कारे "चोद्दही", "चउद्दही" 'इति रूपद्वयम् अपि प्राप्तम्।

### १०. अदातो यथादिषु वा

### सुबोधिनी

**अत इत्यधिकारो निवृत्तः। यथादिष्वादेराकारस्य अकारादेशः स्याद्वा।**

**यथा तथा प्रवाहश्च प्रहारप्राकृतेष्वपि।**

**प्रस्तावः पारिजातश्च चामरोत्खातहालिकाः॥**

**यथादयः स्युरीदृक्षा येषां ह्रस्वो विकल्प्यते।**

जह, जहा; तह तहा। पवहो, पवाहो; पहरो, पहारो। पउअं, पाउअं। पत्थवो, पत्थावो। परिआओ, परिआओ। चमरं, चामरं। उक्खओ, उक्खाओ। हलिओ, हालिओ। अत्र वाशब्देऽनुवर्तमानेऽपि पुनर्वाग्रहणं यथादिष्वेव ह्रस्वत्वविकल्पसंकोचार्थम्। तथा चोक्तम्–

**ब्राह्मणः स्थापितप्राप्तपार्श्वाश्वर्यादयश्च ये।**

**ये पूर्वाह्णादयस्तेऽपि नित्यं ह्रस्वा यथादिषु॥**

बम्हणो। ठविओ। पत्तं। पंसू। अच्छरिअं। पुव्वण्हो। मज्झण्णो। अवरण्हो। एते च पूर्वाह्णादयः॥९॥

### सञ्जीवनी

अत इति निवृत्तम्। यथा इत्येवंप्रकारेषु शब्देषु आत आकारस्य अकारादेशो भवति। वाशब्देऽनुवर्तमाने पुनर्वाग्रहणाद् अनादेरपि। स्थान्यादेशयोस्तकारोऽसन्देहार्थः। जह, जहा, यथा। आदेर्यो जः इति जः। तह, तहा तथा। खघथादिना थस्य हः। पवहो, पवाहो, प्रवाहः। पहरो, पहारो, प्रहारः। पअअं, पाअअं, प्राकृतम्। ऋतोऽत् इत्यत्त्वम्।

कगचादिना कतयोर्लोपः। पत्थरो, पत्थारो, प्रस्तारः। स्तस्य थः इति थः। तस्य द्वित्वे वर्गे युजः पूर्वः इति तः। परिआओ, पारिआओ, पारिजातः। कगचादिना जतयोर्लोपः। चमर, चामरं, चामरमेव। उक्खओ, उक्खाओ, उत्खातः। उपरि लोपः इत्यादिना तलोपः। शेषस्य खस्य द्वित्वे वर्गे युजः पूर्वः इति कः। हलिओ, हालिओ, हालिकः। व्यवस्थितविभाषया ब्राह्मणादौ तु नित्यमः। बम्हणो, ब्राह्मणः। ह्नह्लह्मेष्वित्यादिना हस्योपरि मस्थितिः। ठाविओ, स्थापितः। ष्ठा गतिनिवृत्तावित्यस्य णिजन्तस्य क्तप्रत्यये परे आविः क्ते इत्यादिना णिच्, आविरादेशः। अइदेशा बहुलमिति बहुलग्रहणात् स्थाध्यागा इत्यादिना स्था इत्यस्य ठादेशः। सन्धा-वचामित्यादिना आवेराकारलोपः। कगचादिना तलोपः। ब्राह्मणदित्वाद् आकारस्य नित्यमत्वम्। अथवा स्थापितशब्दस्य संस्कृत-सिद्धस्यैवाङ्गीकारात्। अन्यत्रापि क्वचित् ठत्वं स्थकारस्यैष्यते बुधैरिति स्थस्य ठः। पो व इति वः। पूर्ववदन्यत्। पत्तं, प्राप्तम्। उपरि लोप इत्यादिना पलोपः। शेषादिना तस्य द्वित्वम्। पंसू, पांशुः। सुभिस्सुप्सु दीर्घ इति दीर्घः। अच्छरिअं, आश्चर्यं। श्चत्सप्सां छ इति श्चस्य छः। चौर्यसमेषु रिअ इति र्यस्य रिअ आदेशः। पुव्वण्हो, पूर्वाह्नः। उदूता मधुकादिषु इति उत्त्वम्। ह्नह्लह्मेष्वित्यादिना हस्योपरि णस्य स्थितिः। मज्झण्णो, मध्याह्नः। ध्यह्ययोर्झः इति ध्यस्य झः। अस्य द्वित्वे वर्गे युजः पूर्व इति जः। मध्याह्ने हस्य इति हलोपः। नो ण इति णः। तस्य शेषादेशादिना द्वित्वम्। अवरण्हो, अपराह्नः।

यथा तथा प्रवाहश्च प्रहारप्राकृते अपि।
प्रस्तारः पारिजातश्च चामरोत्खातहालिकाः॥
यथादयः स्युरीदृक्षा एषां ह्रस्वो विभाषया।
ब्राह्मणः स्थापितः प्राप्तपांश्वाश्चर्यादयश्च ये॥
ये पूर्वाह्णादयस्तेऽपि नित्यं ह्रस्वा यथादिषु॥९॥

प्राकृतमञ्जरी

यथादिषु भवेदादेराकारस्य विकल्पतः।
अत्त्वं जह जहा वा स्याच्चमरं वाथ चामरं॥

यथा चामर-दावाग्नि-प्रहारोत्खात-हालिकाः।

तालवृन्तं तथा चाटु यथादिः स्यादयं गणः॥ ॥

## मनोरमा

अत इति निवृत्तम्। स्थान्यन्तरनिर्देशात्। यथा इत्येवमादिषु आतः स्थाने अकारादेशो भवति वा। जह, जहा। तह, तहा। पत्थरो, पत्थारो। पउअं, पाउअं। तलवेन्टअं, तालवेण्टअं। उक्खअं, उक्खाअं। चमरं, चामरं। पहरो, पहारो। चडु, चाडु। दवग्गी, दावग्गी। खइअं, खाइअं। संठविअं, संठाविअं। हलिओ, हालिओ॥ यथा-तथा-प्रस्तार-प्राकृत-तालवृन्तकोत्खात-चामर-प्रहार-चाटु-दावाग्नि-खादित-संस्थापित-हालिकाः॥

## अम्बिका

"आदेरतः ("आदेरतः" (प्रा. १.१) इत्यतः "आदेः" अनुवर्त्तते। 'अतः' पदस्यानुवृत्तिस्तु समाप्तम्। सूत्रे 'आतः' इति निर्देशात्। "मयूरमयूखयोर्व्वा वा' (प्रा. १.८) इत्यतः 'वा' इति पदस्यानुवृत्तित्वेऽपि सूत्रे पुनः उपादानत्वात्, 'आदि' पदेन सह 'अनादि' पदस्यापि ग्रहणं इति प्रतीयते।

## सूत्रार्थः

यथा आदि (तथा, प्रस्तार, प्राकृत, तालवृन्तक, उत्खात, चामर, प्रहार, चाटु, दावाग्नि, खादित, संस्थापित, हालिक) संस्कृत शब्देषु आदिषु अनादिषु (मध्यः, अन्त्यः) च विद्यमानौ दीर्घ-आ कारस्य स्थाने प्राकृते विकल्पेन ह्रस्व-अ' कारः भवति।

**यथा– यथा > जह, जहा**

'यथा' इति स्थिते "आदेर्यो जः" (प्रा. २.३१) इत्यनेन सूत्रेण आदि 'य्' इत्यस्य 'ज्' कारे, "खघथधभां हः" (प्रा. २.२७) इत्यनेन 'सूत्रेण 'थ्' कारस्य 'ह्' कारे 'जहा' इति प्राप्ते "अदातो–यथादिषु वा" (प्रा. १.१०) सूत्रेण अनादि (अन्त्य) 'आ' कारस्य "अ" कारे विकल्पेन जह, तथा जहा रुपद्वयं सिद्धम्।

**तथा > तह, तहा**

"तथा" इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण

'थ्' कारस्य "ह्" कारे तहा' इति प्राप्ते "अदातो यथादिषु वा" (प्रा. १.१०) इति सूत्रेण 'आ' (अन्त्य) कारस्य 'अ' कारे विकल्पेन 'तह इति रूपं, विकल्पाभाव पक्षे 'तहा' इति रूपद्वयं सिद्धम्।

### प्रस्तारः > पत्थरो, पत्थारो

'प्रस्तारः' इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' इत्यस्य लोपे 'पस्तार' इति स्थिते "स्तस्य थः" (प्रा. ३.१२) इति सूत्रेण 'स्त्' इत्यस्य 'थ्' कारे 'पथार' इति जाते "शेषादेशयोर्द्वित्व मनादौ" (प्रा. ३.५०) इति सूत्रेण 'थ्' इत्यस्य द्वित्वे 'पथ्थार' इति स्थिते "वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इति सूत्रेण 'थ्' कारस्य त्' कारे 'पत्थार" इति जाते "अदातो यथादिषु वा" (प्रा. १.१०) इति सूत्रेण आ कारस्य (मध्यस्थ) विकल्पेन "अ" कारे 'पत्थर' इति प्राप्ते "अत ओत् सोः" (प्रो. ५.१) इति सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे "पत्थरो" इति रूपद्वयं सिद्धम्।

### प्राकृतम् > पउअं पाउअं

"प्राकृतम्" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इति सूत्रेण 'र्' इत्यस्य लोपे "पाकृतम्" इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इति 'सूत्रेण 'ऋ' कारस्य 'उ' कारे "पाकुतम्" इति प्राप्ते "कगचज तदपयवां प्रायो लोपः" (प्रा. २.२) इति सूत्रेण क्त् वर्णयोः लोपे "पाउअम्" इति जाते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके "सु" इत्यस्य "बिन्दुत्वे" (अनुस्वारे) "पाउअं रूपं सिद्धम्। "अदातो यथादिषु वा" (प्रा. १.१०) इति सूत्रेण "आदि-आ" कारस्य विकल्पेन 'ह्रस्व-अ" कारे "पउअं" इति रूपमपि सिद्धम्।

### तालवृन्तकम् > तालवेण्टअं, तलवेण्टअं

"तालवृन्तकम्" इति स्थिते "इदृष्यादिषु" (प्रा. १.२८) इति सूत्रेण ऋकारस्य 'इ' कारे "तालविन्तक" इति जाते, "इत–एत पिण्डसमेषु" (प्रा. १.१२) इति सूत्रेण "इ" कारस्य 'ए' कारे "तालवेन्तक" इति स्थिते 'न्त्' इत्यस्य "ण्ट्" इतिप्राप्ते "तालवृन्ते ण्टः" (प्रा. ३.४५) सूत्रेण, "तालवेण्टक" इति स्थिते, "कगचजतपयवां प्रायो लोपः" (प्रा. २.२) इति सूत्रेण 'क्' इत्यस्य लोपे "तालवेण्टअ" इति स्थिते,

"सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "तालवेण्टअं", "अदातो यथादिषु वा" (प्रा. १.१०) इति सूत्रेण "आदि-आ" कारस्य विकल्पेन ह्रस्व-अ' कारे, "तलवेण्टअं" रूपद्वयंसिद्धम्।

### उत्खातम् > उक्खअं, उक्खाअं

'उत्खात' इति स्थिते "उपरि लोपः कगडतदपषसाम्" (प्रा. ३.१) इति सूत्रेण "त्' इत्यस्य लोपे "उखात" इति स्थिते "शेषादेशेयोर्द्वित्वमनादौ" (प्रा. ३.५०) इति सूत्रेण 'ख्' इत्यस्य द्वित्वे 'उख्खात' इति स्थिते, "वगेषु युजः पूर्वः" (प्रा. ३.५१) इति सूत्रेण द्वित्व 'ख्' कारस्य 'क्' कारे उक्खात" इति स्थिते "कगचजतदपयवां प्रायो लोपः (प्रा. २.२) इति सूत्रेण "उक्खाअ" इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण 'सु' इत्यस्य नपुंसके बिन्दुत्वे (अनुस्वारे) "उक्खाअं" इति प्राप्ते "अदातो यथादिषु वा" (प्रा. १.१०) इति सूत्रेण "आ" कारस्य विकल्पेन ह्रस्व-अ" कारे "उक्खअं" इति रूपद्वयंसिद्धम्।

### चामरम् > चमरं, चामरं

चामरम् इति स्थिते "अदातो यथदिषु वा" (प्रा. १.१०) इति सूत्रेण आदि-आ' कारस्य "ह्रस्व-अ" कारे विकल्पेन "चमर" इति जाते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) चामरं "चमरं" रूपद्वयं सिद्धम्।

### प्रहारः > पहरो, पहारो

"प्रहारः" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इति सूत्रेण 'र्' इत्यस्य लोपे पहार इति जाते अदातोयथादिषुवा" (प्रा. १.१०) इति सूत्रेण 'आ-कारस्य विकल्पेन ह्रस्व-अ कारे 'पहर' इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे' पहरो" तथा विकल्पाभाव पक्षे" पहारो" इति रूपद्वयं सिद्धम्।

### चाटु > चाडु, चडु

'चाटु' इति स्थिते "टोड़" (प्रा. २.२०) इत्यनेन सूत्रेण ट्' इत्यस्य

'ड्' कारे, चाडु' इति प्राप्ते "अदातोयथादिषुवा" (प्रा. १.१०) इति सूत्रेण 'आदि-आ' कारस्य विकल्पेन "ह्रस्व-अ" कारे 'चाडु' तथा 'चडु' इति रूपद्वयं सिद्धम्।

## दावाग्निः > दवग्गी, दावग्गी

'दावाग्नि' इति स्थिते "सन्धावचामज्लोपविशेषा वहुलम्" (प्रा. ४.१) इत्यनेन सूत्रेण सन्ध्यस्थ "आ" कारस्य "अ" कारे "दावग्नि" इति जाते अधो मनयाम्" (प्रा. ३.२) इति सूत्रेण 'न्' कारस्य लोपे 'दावगि' इति जाते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इति सूत्रेण 'ग्' इत्यस्य द्वित्वे "दावग्गि" इति स्थिते "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इति सूत्रेण इदन्तस्य दीर्घत्वे दावग्गी इति प्राप्ते "अदातो यथादिषु वा" (प्रा. १.१०) इति सूत्रेण 'आदि-आ' कारस्य विकल्पेन ह्रस्व-अ' कारे "दवग्गी" इति रूपद्वयंसिद्धम्।

## खादितम् > खइअं, खाइअं

"खादितम्" इति स्थिते, "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इति सूत्रेण त्द् वर्णयोः लोपे "खाइअम्" इति जाते "अदातो यथादिषु वा" (प्रा. १.१०) इति सूत्रेण आदि-आ' कारस्य विकल्पेन "ह्रस्व-अ" कारे "खइअम्" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५. ३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) 'खइअं' तथा विकल्पाभाावपक्षे "खाइअं" इति रूपद्वयं सिद्धम्।

## संस्थापितम् > संठविअं, संठाविअं

"संस्थापितम्" इति स्थिते "ठाझागाश्च वर्तमानभविष्य द्विध्याद्येक वचनेषु" (प्रा. ८.२६) इतिं सूत्रेण 'स्था' इत्यस्य "ठा" आदेशे "संठापित" इति स्थिते "न बिन्दुपरे" (प्रा. ३.५६) इति सूत्रेण अनुस्वार परे द्वित्व निषेधे, पोवः" (प्रा. २.१५) इत्यनेन 'प्' कारस्य 'व्' कारे "संठावित" इति जाते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "त्" इत्यस्य लोपे "संठाविअ" इति प्राप्ते "अदातो यथादिषु वा" (प्रा. १.१०) इति सूत्रेण 'आदि-आ' कारस्य 'अ' कारे विकल्पेन "संठविअ" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) 'संठविअं, 'संठाविअं' इति रूपद्वयं सिद्धम्।

हालिकः > हालिओ, हलिओ

"हालिकः" इति स्थिते "कगचजतदपयवांप्रायोलोपः "(प्रा. २.२) इति सूत्रेण 'क्' इत्यस्य लोपे 'हालिअ' इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इति सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने 'सु' इत्यस्य ओत्वे '"हालिओ" इति प्राप्ते "अदातो यथादिषु वा" (प्रा. १.१०) इति सूत्रेण आदि-आ' कारस्य "ह्रस्व-अ" कारे विकल्पेन "हलिओ" इति रूपद्वयंसिद्धम्।

## ११. इत्सदादिषु

### सुबोधिनी

सदेति लुप्तसप्तम्यन्त पदम्। सदाशब्दे आदेः आत इत्स्यात् वा। सइ, सआ। आत इत्यधिकारो निवृत्तेः॥१०॥

### सञ्जीवनी

सदा इति लुप्तसप्तम्यन्तम्। आत इत्यनुवर्तते वेति च। सदाशब्दे आकारस्य इदादेशो भवति वा। सइ, सआ, सदा। कगचादिना दलोपः॥१०॥

### प्राकृतमञ्जरी

अव्ययत्वात् सदेत्येतत् सप्तम्यन्तं पदं भवेत्।
आतस्तत्रत्विकारो वा स्यात् सदा सइ वा सआ॥११॥

### मनोरमा

सदा इत्येवमादिष्वात इकारो भवति वा, सइ, सआ। तइ, तआ। जइ, जआ। सदा, तदा, यदा।

### अम्बिका

"आदेरतः" इत्यतः (प्रा. १.१) "आदेः" पदस्यानुवृत्तिर्न भवति इति उदाहरणात् स्पष्टम्। परन्तु "अदातो यथादिषु वा" (प्रा. १.१०) इति सूत्रतः "आतः" वा" च पदद्वयमनुवर्त्तते।

### सूत्रार्थः

सदा आदि (तदा, यदा) संस्कृत शब्देषु दीर्घ 'आ' कारस्य विकल्पेन ह्रस्व–इ–कारः भवति।

यथा—

**सदा > सइ, सआ**

"सदा" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'द्' कारस्य लोपे "सआ" इति रूपं प्राप्ते, "इत्सदादिषु" (प्रा. १.११) इति सूत्रेण "आ" कारस्य विकल्पेन 'इ' कारे "सइ" इति रूपद्वयंसिद्धम्।

**तदा > तइ, तआ**

"तदा" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'द्' कारस्य लोपे "तआ" इति पदं प्राप्ते, "इत्सदादिषु" (प्रा. १.११) इति सूत्रेण "आ" कारस्य विकल्पेन 'इ' कारे तइ" इति पदद्वयंसिद्धम्।

**यदा > जइ, जआ**

"यदा" इति स्थिते "कगचजतदपयवां' प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'द्' कारस्य लोपे 'यआ' इति स्थिते "आदेर्यो जः" (प्रा. २.३१) इत्यनेन सूत्रेण आदि-'य्' इत्यस्य 'ज्' कारे "जआ" इति प्राप्ते, "इत्सदादिषु" (प्रा. २.२२) इति सूत्रेण "आ" कारस्य विकल्पेन 'इ' कारे "जइ" इति रूपद्वयंसिद्धम्।

## १२. इत एत् पिण्डसमेषु

### सुबोधिनी

**पिण्डसमेषु इत इकारस्य एत्त्वं स्याद्वा।**

**पिण्डसिंदूरधम्मिल्लविष्णुविल्वा सविष्टयः।**

**इत्याद्याः पिण्डतुल्याः स्युर्येषामेत्त्वं विधीयते॥**

पेंडं, पिंडं। सेंदूरं, सिंदूरं। धम्मेल्लो, धम्मिल्लो। वेण्हू, विण्हू। वेल्लं, विल्लं। वेट्ठी, विट्ठी।

**व्यवस्थितविकल्पत्वात् किंशुके नित्यमेदितः। केसुअं॥**

### सञ्जीवनी

वेत्यनुवर्तते। पिण्ड इत्येवं सदृशेषु शब्देषु इकारस्य एत्वं वा

भवति। पेण्डं, पिण्डं, पिण्डमेव। सेंदूरं, सिंदूरं, सिन्दूरमेव। नञो हलीति नस्य बिन्दुः। तस्य कपि तद्वगन्ति इति वा नत्वम्। धम्मेल्लो, धम्मिलो, धम्मिल्ल एव। बेण्हू, बिण्हू, बिष्णुः। ह्रस्रष्णक्ष्णश्नाम् इति ष्णाशब्दस्य ण्ह आदेशः। सुभिस्सुप्सु दीर्घ इति दीर्घः। अन्त्यस्य हल इति सुलोपः। वेल्लं, बिल्लं, विल्वम्। सर्वत्र लवरामिति वलोपः। शेषादेशादिना लस्य द्वित्वम्। वेट्ठी, विट्ठी, विष्टिः। ष्ठस्य ठ इति ठः।

**पिण्डसिन्दूरधम्मिल्लविष्णुबिल्वाः सविष्टयः।**

**इत्याद्याः पिण्डतुल्याः स्युर्येषामेत्त्वं विभाषया॥**

व्यवस्थितविकल्पत्वात् किंशुके नित्यमेदितः। केशुओ, किंशुकः। मांसादिषु वेति बिन्दुलोपः॥

### मनोरमा

"पिण्ड" इत्येवंसमेषु इकारस्यैकारादेशो भवति वा। पेण्डं, पिण्डं, णेद्दा, णिद्दा, सेन्दूरं, सिन्दूरं, धम्मेलं धम्मिल्लं, चेन्धं, चिन्धं, वेण्हू, विण्हू, पेट्ठं, पिट्ठं॥ पिण्ड-निद्रा-सिन्दूर, धम्मिल्ल-चिह्न-विष्णु-पिष्टानि॥ समग्रहणं संयोगपरस्योपलक्षणार्थम्॥

### अम्बिका

"आदेरतः" (प्रा. १.१) इत्यतः "आदेः" पदस्यानुवृत्तिर्भवति इति उदाहरणात् स्पष्टम्। परन्तु "अदातोयथादिषु वा" (प्रा. १.१०) इति सूत्रतः "वा" पदस्यानुवृत्तित्वात् "आदि" तथा "अनादि" इति द्वयोः पदयोः ग्रहणम् इति तात्पर्यम्।

### सूत्रार्थः

'पिण्डम्' आदि सदृशेषु (निद्रा, सिन्दूरम्, धम्मिल्लम्, चिह्नम्, विष्णुः, पिष्टम्) संस्कृत शब्देषु अनादौ विद्यमाने "ह्रस्व–इ" कारस्य स्थाने प्राकृते 'ए' कारः भवति विकल्पेन।

### यथा–

पिण्डम् > पेण्डं, पिण्डं

"पिण्डम्" इति स्थिते "इत एत् पिण्डसमेषु" (प्रा. १.१२) इति

सूत्रेण "आदि-इ" कारस्य 'ए' कारे विकल्पेन "पेण्ड" इति स्थिते, "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे "पेण्डं, पिण्डं" च रूपद्वयं सिद्धम्।

### निन्द्रा > णेद्दा, णिद्दा

"निद्रा" इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इति सूत्रेण 'न्' इत्यस्य 'ण्' कारे 'णिद्रा' इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे "णिदा" इति जाते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'द्' कारस्य द्वित्वे "णिद्दा" इति प्राप्ते "इत एत्' पिण्डसमेषु" (प्रा. १.१२) इति सूत्रेण आदि 'इ' कारस्य विकल्पेन 'ए' कारे "णेद्दा" इति रूपं सिद्धम्।

### सिन्दूरम् > सेन्दूरं, सिन्दूरं

"सिन्दूरम्" इति स्थिते "इत एत् पिण्ड्समेषु" (प्रा. १.१२) इति सूत्रेण "आदि-इ" कारस्य 'ए' कारे (विकल्पेन) 'सेन्दूर' इति जाते "यायि तदवर्गान्तः" (प्रा. ४.२७) इति सूत्रेण ययि परे बिन्दु तदवर्गान्तत्वात् 'सेन्दूर' इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे "सेन्दूरं तथा विकल्प अभावपक्षे "सिन्दूरं" इति रूपं सिद्धम्।

### धम्मिल्लम् > धम्मेल्लं, धम्मिल्लं

"धम्मिलम्" इति स्थिते "इत एत् पिण्डसमेषु" (प्रा. १.१२) इति सूत्रेण "इ" कारस्य (विकल्पेन) 'ए' कारे 'धम्मेल्ल" इति प्राप्ते "सोर्बिन्दुनपुंसके" इति (प्रा. ५.३०) सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे "धम्मेल्लं" तथा विकल्प अभाव पक्षे "धम्मिल्लं" रूपं सिद्धम्।

### चिह्नम् > चेन्धं, चिन्धं

"चिह्नम्" इति 'स्थिते "चिह्ने न्धः" (प्रा. ३.३४) इति सूत्रेण 'ह्न' इत्यस्य स्थाने 'न्ध्' कारे "चिन्ध" इति' स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण "चिन्धं" इति प्राप्ते "इत एत् पिण्ड समेषु" (प्रा. १.१२) इति सूत्रेण "इ" कारस्य 'ए' कारे (विकल्पेन) "चेन्धं" रूपं सिद्धम्'।

**विष्णुः > वेण्हू, विण्हू**

"विष्णुः" इति स्थिते "ह्रस्नष्णक्ष्णश्नां ण्हः" (प्रा. ३.३३) इति सूत्रेण 'ष्ण्' इत्यस्य "ण्ह्" कारे "विण्हु" इति स्थिते "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन उकारान्त शब्दस्य 'सु' प्रत्यये, दीर्घत्वे "विण्हू" इति प्राप्ते "इत एत् पिण्डसमेषु" (प्रा. १.१२) इति सूत्रेण 'इ' इत्यस्य "ए" कारे (विकल्पेन) वेण्हू" इति रूपं सिद्धम्।

**पिष्टम् > पेट्ठं, पिट्ठं।**

"पिष्टम्" इति स्थिते "ष्टस्य ठः" (प्रा. ३.१०) इति सूत्रेण 'पिठ' इति स्थिते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इति सूत्रेण 'ठ्' इत्यस्य द्वित्वे "पिठ्ठ" इति स्थिते, 'वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इति सूत्रेण 'ठ्' इत्यस्य 'ट्' कारे "पिट्ठ" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "पिट्ठं" तथा "इत एत् पिण्डसमेषु" (प्रा. १.१२) इति सूत्रेण 'इ' कारस्य 'ए' कारे "पेट्ठं" इति रूपद्वयं प्राप्तम्।

**समन्वयः**

भामह आचार्येण "सिन्दूरम्" इति शब्दे 'न्' इत्यस्य "नञोर्हलि" (प्रा. ४.१४) इत्यनेन सूत्रेण अनुस्वारं (बिन्दुं) न कृतम्। प्राकृत नाटके सिन्दूरं, सिदूंरं उभय लभ्यते।

## १३. अत् पथिहरिद्रापृथिवीषु

### सुबोधिनी

एष्विकारस्याऽकारादेशः स्यात्। पहो। हलद्दा। पुहवी।। ।।

### सञ्जीवनी

इत इत्यनुवर्तते ईत् सिंहजह्वयोरिति यावत्। एषु शब्देष्विकारस्य अकारादेशो भवति। पहो, पन्थाः। नञोर्हलीति नस्य बिन्दुः। तस्य मांसादिसु वेति लोपः, खघथादिना थस्य हः। अनेन इकारस्य अत्वम्। तस्य अकारस्य क्वचिदपि लोप इति लोपः। हलद्दा, हलद्दी, हरिद्रा। हरिद्रादीनां रोल इति लः। द्रे रो वेति रेफलोपः। यदा इलद्दीति, तदाऽऽदीतौ बहुलमिति ईप्रत्ययः। पुहवी, पृथिवी। उदत्वादिष्विति ऋकारस्य उः।। ।।

**प्राकृतमञ्जरी**

अत्त्वं पथिहिरिद्रायां पृथिव्याञ्च भवेदितः।
पन्थाः पहो हरिद्रापि हलद्दा पुहवी परा।। ।।

**मनोरमा**

पथ्यादिषु शब्देषु इकारस्याकारो भवति। पहो, हलद्दा, पुहवी।

**अम्बिका**

"इत एत् पिण्डसमेषु" (प्रा. १.१२) इति सूत्रतः "इतः" इति पदमनुवर्त्तते।

**सूत्रार्थः**

पथिन्, हरिद्रा, तथा पृथिवी आदि संस्कृत शब्देषु "ह्रस्व–इ" कारस्य स्थाने प्राकृते "ह्रस्व-अ" कारः भवति।

**पन्थाः > पहो**

"पथिन्" इति स्थिते, "अत् पथिहरिद्रापृथिवीषु" (प्रा. १.१३) इति 'सूत्रेण ह्रस्व इ' कारस्य' 'अ' कारे "पथन्" इति स्थिते, "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'थ्' कारस्य 'ह्' कारे "पहन्" इति स्थिते "अन्त्यहलः" (प्रा. ४.६) इति सूत्रेण 'न्' कारस्य लोपे "पह" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे" "पहो" इति रूपं सिद्धम्।

**हरिद्रा > हलद्दा**

'हरिद्रा' इति स्थिते "अत् पथिहरिद्रापृथिवीषु" (प्रा. 2.23) इत्यनेन सत्रेण 'इ' कारस्य' 'अ' कारे, "हरद्रा" इति स्थिते, "हरिद्रादीनां रोलः" (प्रा. 2.30) इति सूत्रेण 'र' कारस्य 'ल' कारे, हलद्रा" इति स्थिते, "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र' इत्यस्य लोपे "हलदा" इति स्थिते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इति सूत्रेण 'द्' इत्यस्य द्वित्वे "हलद्दा" इति रूपं सिद्धम्।

### पृथिवी > पुहवी

"पृथिवी" इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इत्यनेम सूत्रेण "ऋ" कारस्य "उ" कारे "पुथिवी" इति स्थिते, "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'थ्' कारस्य 'ह' कारे 'पुहिवी' इति स्थिते, "अत् पथिहरिद्रा पृथिवीषु" (प्रा. १.१३)। इति सूत्रेण 'ह्रस्व-इ' कारस्य 'अ' कारे "पुहवी" इति रूपं सिद्धम्।

### १४. इतेस्तः पदादेः

### सुबोधनी

आदिभूतस्य इतिशब्दस्य यस्तिस्तस्याऽकारादेशः स्याद् वा। इअ विहसंतो सुहवं। आदेरिति किम्? हरो त्ति, हर इति। एरिति वक्तव्ये तेरिति तकारग्रहणं किम्? प्रथमेकारस्य मा भूदिति॥ ॥

### सञ्जीवनी

अदित्यनुवर्तते। आदिभूते इतेः इतिशब्दसम्बन्धी यस्तिकारः तस्य इस्थाने अकारादेशो भवति। इअ विहसन्तो अहअं। कगचादिना तलोपः। आदेरिति किम्? हरो त्ति, हर इति। हरशब्द अत ओत् सोरित्योत्त्वम्। इतिशब्दे नीडादिष्विति तस्य द्वित्वम्। ततः सन्धावचामित्यादिना इकारलोपः। एवं सुधणो त्ति, सुजन इति। तेरिति किम्।? आदेरिकारस्य मा भूत्॥ ॥

### प्राकृतमञ्जरी

आदेरित्यत्र वाक्यादेरिति शब्दस्य यस्तुतः।
इतस्तद्वर्तिनः प्रोक्तमत्त्वमित्युच्यतामिअ॥१४॥

### मनोरमा

पदादेरिति शब्दस्य यस्तकारस्तस्मात् परस्येकारस्य अकारो भवति। इअ उअह अण्णहा वअणं। इअ विअसन्तीउ चिरं॥ इति पश्यतान्यथावचनम् इति विकसन्त्यश्चिरम्। पदोदेरिति वचनादिह न भवति–पिओ त्ति (प्रियइति)।

अम्बिका

"इत एत् पिण्डसमेषु" (प्रो १.१२) इति सूत्रतः "इतः" "अत् पथिहरिद्रापृथिवीषु" (प्रा. १.१३) इत्यस्मात् सूत्रात् "अत्" पदद्वयमनुवर्त्तते।

सूत्रार्थः

पदस्यादौ विद्यमाने संस्कृत "इति" शब्दस्य 'त्' वर्णादपरं स्थित 'इ' कारस्य प्राकृते 'ह्रस्व-अ कारः (अत्) भवति।

यथा–

"इति पश्यतान्यथावचनम्।" > इअ उअह अण्णहा वअणं।

"इति" इत्यस्य "इतेस्तः पदादेः" (प्रा. १.१४) सूत्रेण अत्र पदादि त्वात् 'त्' वर्णाथि 'इ' कारस्य 'अ'कारे "इत" इतिप्राप्ते "कगचजतदपयवां प्रायो लोपः (प्रा. २.२) इत्यनेन सूत्रेण 'त्' इत्यस्य लोपे 'इअ' इति पदं सिद्धम्।

"इति विकसन्त्यश्चिरम्"। > इअ विअसन्तीउ चिरं पूर्ववत्।

समन्वयः

अपदादौ "इति" शब्दस्य 'अन्तिम-इ' कारस्य स्थाने 'अ' कारः न भवति। सूत्रे "पदादेः" इति ग्रहणस्य इदमेव तात्पर्यम्।

यथा–

"प्रिय इति" > पिओति

"प्रिय इति" स्थिते "सर्वत्र लवराम्" (प्रो. 3.3) इति सूत्रेण 'र' कारस्य लोपे "पिय 'इति' स्थिते कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इति सूत्रेण 'य्' इत्यस्य लोपे "पिअ इति" स्थिते "अत ओत् सोः" (प्रा. ५.१) इति सूत्रेण अदन्तस्य 'सु' इत्यस्य ओत्वे "पिओ इति" स्थिते "सन्धावचामज्लोपविशेषा वहुलम्" (प्रा. ४.१) इति सूत्रेण 'इ' इत्यस्य लोपे, 'त्' कारस्य "नीड़ादिषु" (च) (प्रा. ३.५२) इत्यनेन सूत्रेण द्वित्वे "पिओत्ति" इति रूपं सिद्धम्।

१५. उदिक्षुवृश्चिकयोः

सुबोधिनी

एतयोः शब्दयोरिकारस्योत्त्वं स्यात्। उच्छू। विञ्छुओ॥

सञ्जीवनी

एतयोरिकारस्य उत्त्वं भवति। उच्छू, इक्षुः। अक्ष्यादिषु छ इति क्षस्य छः। तस्य द्वित्वे वर्गे युजः पूर्व इति चः। सुभिस्सुप्सु दीर्घ इति दीर्घः। विञ्छुओ, वृश्चिक। वृश्चिके ञ्छ इति श्चस्य ञ्छः। इदृष्यादिषु वेति ऋकारस्य इत्वम्। कगचादिना कलोपः॥

प्राकृतमञ्जरी

इतस्तावदुकारः स्यादिक्षुवृश्चिकशब्दयोः।

इक्षुरुच्छू भवत्यत्र वृश्चकश्चापि विच्छुओ॥

मनोरमा

इक्षुवृश्चिकयोरितः उत्वं भवति। उच्छू। विच्छुओ।

अम्बिका

"इत एत् पिण्डसमेषु" (प्रा. १.१२) इत्यतः "अतः" पदमनुवर्तते।

सूत्रार्थः

"इक्षु", वृश्चिक" एतयोः संस्कृत शब्दयोः ह्रस्व 'इ' कारस्य स्थाने प्राकृते ह्रस्व "उ" कारः भवति।

यथा—

इक्षु > उच्छू

'इक्षु' इति स्थिते "अक्ष्यादिषु च्छः" (प्रा. ३.३०) इति सूत्रेण 'क्ष्' इत्यस्य 'च्छ्' कारे "इच्छु" इति स्थिते "उदिक्षुवृश्चिकयोः" (प्रा. १.१५) इति सूत्रेण "इ" कारस्य "उ" कारे 'उच्छु' इति प्राप्ते "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण उदन्तस्य 'सु' इत्यस्य दीर्घे "उच्छू" इति रूपं सिद्धम्।

**वृश्चिकः > विच्छुओ**

"वृश्चिकः" इति स्थिते "इदृष्यादिषु" (प्रा. १.२८) इत्यनेन सूत्रेण 'ऋ' कारस्य 'इ' कारे 'विश्चिक" इति स्थिते उदिक्षुवृश्चिकयोः (प्रा. १.१५) इत्यनेन सूत्रेण 'श्चि' इत्यस्य 'इ' कारस्य "उ" कारे "विश्चुक" इति स्थिते, "वृश्चिके ञ्छः" (प्रा. ३.४१) इत्यनेन सूत्रेण "श्च्" इत्यस्य "ञ्छ्" कारे "विञ्छुक" इति जाते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' कारस्य लोपे "विञ्छुअ" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य ओत्वे "विञ्छुओ" इति रूपं सिद्धम्।

**१६. ओ च द्विधा कृञः**

## सुबोधिनी

कृञ इत्यस्य धातोरुपपदस्य द्विधाशब्दस्येकारस्तस्य ओत्वं स्यात्, चकारादुत्त्वमपि।

दोह्लाइअं, दुहाइअं। द्विधाकृतम्। 'ओत्वं सह नकारेण स्यादितो निज्झरेऽपि वा'। ओज्झरो, णिज्झरो॥१५॥

## सञ्जीवनी

उदित्यनुवर्तते॥ कृञः डुकृञ् करणे इत्यस्य धातोः सम्बन्धिनो द्विधा इत्येतस्य य इकारस्तस्य उकारादेशो भवति, ओकारादेशश्च। दुहाइअं, दोहाइअं। द्विधाकृतम्। सर्वत्र लवरामिति वलोपः। खघथादिना धस्य हः। इदृष्यादिषु वेति ऋकाएस्य इत्वम्। 'ओत्वं सह नकारेणस्यादितो निज्झरेऽपि वा'। ओज्झरो, णिज्झरो, निझरः। सर्वत्र लवरामिति रेफलोपः। शषस्य द्वित्वे वर्गे 'युजः पूर्व इति जः ॥१५॥

## प्राकृतमञ्जरी

कृञोऽधस्ताद् द्विधाशब्दे य इकारः प्रयुज्यते।
तस्य स्यादोत्त्वमुत्त्वं च चकारेणेति दृश्यते॥
द्विधाक्रियत इत्यत्र दोहाइज्जइ जायते।
दुहाइज्जइ वापि स्यादेतं रूपान्तरेष्वपि॥१६॥

**मनोरमा**

कृञ् धातुप्रयोगे द्विधाशब्दस्यौकारौ भवति चकारादुत्वं च, 'द्विधाकृतम्, दोहाइअं' द्विधाक्रियते-दोहाइज्जइ, दुहाइज्जइ॥

**अम्बिका**

"इत एत् पिण्डसमेषु" (प्रा. १.१२) इत्यतः "इत" पदमनुवर्त्तते। सूत्रे "च" इत्यस्य प्रयोगत्वात् "उदिक्षुवृश्चिकयोः" (प्रा. १.१५) इत्यतः 'उत्व' इत्यस्य अनुवर्त्तनमपि सूच्यते।

**सूत्रार्थः**

संस्कृत डुकृञ् (कृ) धातुना सह "द्विधा" शब्दस्य प्रयोगे 'इ' (इत्) कारस्य स्थाने प्राकृते 'ओ' कारः, उकारः च भवतः।

**यथा-**

**द्विधाकृतम् > दोहाइअं, दुहाइअं**

"द्विधाकृतम्" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'व्' कारस्य लोपे 'दिधा' इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'ध' इत्यस्य 'ह' कारे 'दिहाकृतम्' इति जाते, "ओ च द्विधा कृञः" (प्रा. १.१६) इति सूत्रेण 'इ' कारस्य 'ओ' कारे "दोहाकृतम्" इति स्थिते, "इदृष्यादिषु" (प्रा. १.२८) इत्यनेन सूत्रेण "ऋ" कारस्य "इ" कारे "दोहाकितम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण क् त् वर्णयोः लोपे " दोहाइअ" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५. ३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे "दोहाइअं" रूप सिद्धम्, पक्षे 'इ' कारस्य 'उ' 'कारे "दुहाइअं इति सिद्धम्।

**द्विधाक्रियते > दोहाइज्ज, दुहाइज्जइ**

"द्विधाक्रियते" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'व्' कारस्य लोपे "दिधा क्रियते" इति स्थिते "खधथधभां हः" (प्रा. १.२७) इत्यनेन सूत्रेण 'ध्' इत्यस्य 'ह्' कारे 'दिहाक्रियते' इति जाते "ओ च द्विधा कृञः (प्रा. १.१६) इति सूत्रेण 'इ' कारस्य 'ओ' कारे "दोहाक्रियते" इति स्थिते सर्वत्र "लवराम्" (प्रा. ३.३)

इत्यनेन सूत्रेण 'र्' कारस्य लोपे "दोहाकियते" इति स्थिते "कगचजतदपयवां" प्रायो लोपः (प्रा. २.२) इति सूत्रेण 'क्' इत्यस्य लोपे "दोहाइयते" इति स्थिते "आदेर्योजः" (प्रा. २.३१) इत्यनेन सूत्रेण 'य्' कारस्य 'ज्' कारे, "शेषादेशयोर्द्वित्व मनादौ" (३.५०) इति सूत्रेण 'ज्' इत्यस्य द्वित्वे "दोहाइज्ज" इति रूपं सिद्धम्।

## १७. ईत् सिंहजिह्वयोश्च

### सुबोधिनी

अनयोरिकारस्य ईकारः स्यात्। सीहो। जीहा। इत इत्यधिकारो निवृत्तः ॥१६॥

इत इत्येव। एतयोः शब्दयोः इकारस्य ईकारदेशो भवति। सीहो, सिंहः। मांसादिषु वेति बिन्दुलोपः। जीहा, जीह्वा॥२६॥

### प्राकृतमञ्जरी

**ईकारः स्यादिकारस्य शब्दयोः सिंहजिह्वयोः।**

**सिंहो निगद्यते सीहो जिह्वा जीहा निगद्यते॥१७॥**

### मनोरमा

एतयोरादेरिकारसय ईकारो भवति, सीहो, जीहा, चकारोऽनुक्तसमुच्चयार्थः, तेन-वीसत्थो, वीसम्भो इत्येव मादिषु ईत्वं भवति।

### अम्बिका

"आदेरतः" (प्रा. १.१) इत्यतः "आदेः" तथा "इत एत् पिण्डसमेषु" (प्रा. १.१२) इत्यतः "इतः" पदद्वयमनुवर्त्तते। सूत्रे 'च' पदस्य प्रयोगत्वात्, सूत्रे नोल्लिखितं "विश्वस्त", "विश्रम्भ" आदि अन्य शब्दानामपि ग्रहणंस्पष्टम्।

### सूत्रार्थः

'सिंहः', 'जिहवा' तथा सूत्रे नोल्लिखितं 'विश्वस्तः' 'विश्रम्भः' आदि अन्य संस्कृत शब्देषु "आदि-इ" (इत्) कारस्य स्थाने प्राकृते दीर्घ-'ई' कारः भवति।

यथा–

**सिंहः > सीहो**

"सिंहः" इति स्थिते "ईत सिंहजिह्वयोश्च" (प्रा. १.१७) इत्यनेन सूत्रेग 'इ' कारस्य 'ई' कारे 'सीह' इति जाते "मांसादिषु वा" (प्रा. ४.१६) इत्यनेन सूत्रेण अनुस्वारस्य ('.') लोपे 'सीह' इति प्राप्ते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे", सीहो" इति रूपं सिद्धम्।

**जिह्वा > जीहा**

'जिह्वा' इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'व्' इत्यस्य लोपे 'जिहा' इति प्राप्ते, "ईत् सिंहजिह्वयोश्च" (प्रा. १.१७) इत्यनेन सूत्रेण 'ह्रस्व-इ' कारस्य 'दीर्घई' कारे 'जीहा" रूपं सिद्धम्।

**विश्वस्तः > विसत्थो**

"विश्वस्तः" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'व्' इत्यस्य लोपे 'विशस्त" इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे "विसस्त" इति जाते "स्तस्य" थः" (प्रा. ३.१२) इत्यनेन सूत्रेण 'स्त' इत्यस्य 'थ' कारे "विसथ" इति स्थिते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'थ्' कारस्य द्वित्वे "विसथ्थ" इति जाते "वर्गेषु 'युजः पूर्वः" (प्रा. ३.५१) इत्यनेन सूत्रेण 'थ्' कारस्य 'त्' कारे "विसत्थ" इति जाते "ईत् सिंहजिह्वयोश्च (प्रा. १.१७) इत्यनेन सूत्रेण 'इ' कारस्य 'ई' कारे "वीसत्थ" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा बिभक्ति एकवचने "सु" इत्यस्य ओत्वे "विसत्थो" इति रूपं सिद्धम्।

**विश्रम्भः > वीसम्भो**

"विश्रम्भः" इति स्थिते "ईत् सिंहजिह्वयोश्च" (प्रा. १.१७) इत्यनेन सूत्रेण "इ" कारस्य "ई" कारे "वीश्रम्भ" इति जाते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' इत्यस्य लोपे "वीशम्भ" इति जाते "शषोः "सः" (प्रा. २.४३) इत्यनेन सूत्रेण "श्" कारस्य 'स्' कारि

"वीसम्भ" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "वीसम्भो" इति रूपं सिद्धम्।

**समन्वयः**

सूत्रस्य आधारभूत नियमः पर्य्यालोचनात्मकः। प्राकृतभाषायाः मान्य नियमस्तु संस्कृतस्वराणाम् रूपाणि परिवर्त्तन्ते, किन्तु संस्कृतस्वराणाम् गुरुत्वं संरक्षते च। यदि मूल संस्कृत स्वरः गुरुर्भवति, प्राकृते परिवर्त्तन समये गुरुत्वमपि संरक्षते। अतः ह्रस्व स्वरस्य दीर्घत्त्वमपियुक्तम्। अनेन सूत्रानुसारेण "जिह्वा" शब्दस्य 'ह्रस्व ' 'इ' 'कारस्य दीर्घ "ई" कारः भवति। "संयोगाद्यत्वात्", "जि" गुरुः भवति। परन्तु "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण "जिह्वा" इत्यस्य "व्" कारस्य लोपे ह्कारः वर्त्तते।

अतः "जि" इत्यस्य "इ" कारः न गुरूः। मूल गुरूत्वस्य रक्षा दीर्घ 'ई' कारे सम्भवम्'। फलतः 'इ' कारस्थ दीर्घत्वे "जीहा" इति प्राकृत शब्द सिद्धिर्भवति। अनेकानि सूत्राणि अयं नियमस्य संरक्षाणार्थं रचितम्।

## १८. इदीतः पानीयादिषु

**सुबोधिनी**

**पानीयादिष्वीकारस्य इकारादेशः स्यात्।**

**पानीयव्रीडितालीकतीयेदानींनिरीक्षितः।**

**गृहीतानीतगंभीराः पानीयादय ईदृशाः॥**

पाणिअं। विलिअं। अलिअं। दुइअं। तइअं। द्वितीयतृतीययोस्तीय. प्रत्ययान्तयोः।

दाणि। णिरिक्खिओ। गहिरं॥१९॥

**सञ्जीवनी**

पानीयादिषु ईतः ईकारस्य इत् इकारगमः स्यात्। पाणिअं, पानीयम्। नो ण इति नस्य णः। कगचादिना यलोपः। विलिअं, व्रीडितं। सर्वत्र लवरामिति रेफलोपः। डस्य लः। तस्य कगचादिना लोपः। अलिअं,

अलीकम्। दुइअं, द्वितीयम्। तकारयकारयोः कगचादिना लोपः। तइअं, तृतीयम्। ऋतोऽदिति ऋकारस्य अः। द्वितीयतृतीयशब्दौ तीयप्रत्ययान्तौ। दाणि, इदानीं। णिरिक्खिओ, निरीक्षितः। ष्कस्कक्षां ख इति क्षस्य खः, तस्य द्वित्वे वर्गे युजः पूर्व इति कः। नो ण इति नस्य णः। तस्य कगचादिना लोपः। गहिअं, गृहीतम्। ऋतोऽदिति ऋकारस्य अत्वम्। गहिरं, गंभीरम्। खंघथादिना भस्य हः। मांसादिषु वेति बिन्दुलोपः। आणिअं, आनीतम्।

**पानीयव्रीडितालीकतीयेदानींनिरीक्षताः।**

**गृहीतामीतगंभीराः पानीयादय ईदृशाः॥**

प्राकृतमञ्जरी

**पानीयादिष्विकारः स्यादीकारस्यादिवर्त्तिनः।**

**पानीयं पाणिअं विद्यादलीकमलिअं तथा॥**

**पानीय-व्रीडितालीक-द्वितृतीयकरीषकाः।**

**गभीरञ्च तदानीञ्च पानीयादिरयं गणः॥१८॥**

## मनोरमा

"पानीयम्" इत्येवमादिष्वादेरीकारस्य इकारो भवति। पाणिअं। अलिअं। वलिअं। तआणिं, करिसो। दुइअं। तइअं। गहिरं। पानीय-अलीक-व्यलीक-तदानीं, करीष-द्वितीय-तृतीय-गभीराः॥

## अम्बिका

प्रथमसूत्रं "आदेरतः" इत्यतः 'आदेः' इति पदमनुवर्त्तते इति भामहेन दृष्ट्या संगतम्। परन्तु उदाहरणेषु "आदेः" इति शब्दस्य तात्पर्यं न प्रतीयते। यतः स्वयं पानीयम् > पाणिअं इति शब्दे मध्यस्थ 'ई' कारस्य 'इ' कारः भवति। अतः अस्मिन् सूत्रे 'आदेः' इति पदस्यनानुवर्त्तनम् स्पष्टम्।

## सूत्रार्थः

"पानीयम्" आदि संस्कृत शब्दस्य "दीर्घ-ई" कारस्य स्थाने प्राकृते "ह्रस्व -इ" कारः भवति। अलीकम्, व्यलीकम्, तदानीम्, करीषः,

द्वितीयम्, तृतीयम्, तथा गभीरम् इति शब्दान् वोधयितुम् सूत्रे "आदि" पदस्य ग्रहणम् स्पष्टम्।

**यथा—**

### पानीयम् > पाणिअं

पानीयम्' इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे "पाणीय" इति स्थिते "इदीतः पानीयादिषु" (प्रा. १.१८) इति सूत्रेण 'दीर्घ-ई' कारस्य ह्रस्व-इ' कारे पाणिय" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'य्' इत्यस्य लोपे "पाणिअ" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे "पाणिअं" इति रूपं सिद्धम्।

### अलीकम् > अलिअं

"अलीकम्" इति स्थिते "इदीतः पानीयादिषु" (प्रा. १.१८) इत्यनेन सूत्रेण "ई" कारस्य ह्रस्व-इ" कारे "अलिकम्" इति जाते, "कगचजतद पयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' कारस्य लोपे "अलिअ" इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "अलिअं" इति रूपं सिद्धम्।

### व्यलीकम् > वलिअं

"व्यलीकम्" इति स्थिते "अधो मनयाम्" (प्रा. ३.२) इत्यनेन सूत्रेण 'य्' इत्यस्य लोपे "वलीकम्" इति स्थिते, "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' इत्यस्य लोपे 'वलीअम्' इति जाते "इदीतः पानीयादिषु" (प्रा. १.१८) इत्यनेन सूत्रेण दीर्घ-ई" कारस्य ह्रस्व-इ" कारे 'वलिअ" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "वलिअं" इति रूपं सिद्धम्।

### तदानीम् > तआणिं

"तदानीम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'द्' कारस्य लोपे "तआनीम्" इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' इत्यस्य 'ण्' कारे "तआणीम्"

इति स्थिते "इदीतः पानीयादिषु" (प्रा. १.१८) इत्यनेन सूत्रेण "दीर्घ-ई" कारस्य "हृस्व-इ" कारे, "तआणि" इति स्थिते "मो बिन्दुः" (प्रा. ४.१२) इत्यनेन सूत्रेण अन्तिम हल् (व्यञ्जन) 'म्' इत्यस्य स्थाने बिन्दुः (अनुस्वारे) आगमे "तआणिं" रूपं सिद्धम्।

**करीषः > करिसो**

"करीषः" इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'ष्' कारस्य 'स्' कारे "करीस" इति स्थिते "इदीतः पानीयादिषु" (प्रा. १.१८) इत्यनेन सूत्रेण "दीर्घ-ई" कारस्य "हृस्व-इ" कारे "करिस" इति स्थिते, "अत ओत् सो" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य ओत्वे "करिसो" इति रूपं सिद्धम्।

**द्वितीयम् > दुइअं**

"द्वितीयम्" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'व्' इत्यस्य लोपे, "सन्धावचामज्लोपविशेषा वहुलम्" (प्रा. ४. १) इत्यनेन सूत्रेण 'इ' कारस्य 'उ' कारे "दुतीयम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'त्' 'य्' कारयोः लोपे "दुईअम्" इति प्राप्ते "इदीतः पानीयादिषु" (प्रा. १. १८) इति सूत्रेण "दीर्घ-ई" कारस्य "हृस्व-इ" कारे "दुइअ" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "दुइअं" इति रूपं सिद्धम्।

**तृतीयम् > तइअं**

"तृतीयम्" इति स्थिते "ऋतोऽत्" (प्रा. १.२७) इत्यनेन सूत्रेण "ऋ" कारस्य "अ" कारे "ततीयम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'त्' 'य्' कारयोः लोपे "तईअम्" इति जाते "इदीतः पानीयादिषु" (प्रा. १.१८) इत्यनेन सूत्रेण दीर्घ-'ई' कारस्य; हृस्व-इ' कारे 'तइअम्' इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "तइअं" इति रूपं सिद्धम्।

गभीरम् > गहिरं

"गभीरम्" इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'भ्' इत्यस्य 'ह्' कारे "गहीरम्" इति स्थिते "इदीतः पानीयादिषु" (प्रा. १.१८) इति सूत्रेण "दीर्घ-ई कारस्य "ह्रस्व-इ" कारे गहिर" इति प्राप्ते, "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) गहिरं" इति रूपं सिद्धम्।

## १९. एन्नीड़ापीड़कीदृशीदृशेषु

### सुबोधिनी

एष्वीकारस्य एत्वं स्यात्।

णेड्डं। आमेलो। केरिसो।।। एरिसो।

### सञ्जीवनी

एषु ईकारस्य एत्त्वं स्यात्। णेड्डं, नीडम्। नो णः इति नस्य णः। नीडादिष्विति डस्य द्वित्वम्। आमेलो, आपीडः। आपीडे म इति पकारस्य मः। डस्य लः। अत ओत् सोरितिओत्वम्। केरिसो, कीदृशः। क्वचिद्युक्तस्यापीति ऋकारस्य रिः। शषोः स इति शस्य सः। एरिसो ईदृशः। ऋकारस्य रित्वं पूर्ववत्।

### प्राकृतमञ्जरी

नीडापीडेदृशेष्वीतः कीदृशेष्येत्त्वमिष्यते।

तद्यथा णेढ़मामेलो एरिसो केरिसो क्रमात्॥१९॥

### मनोरमा

नीड़ादिष्वीकारस्यैकारो भवति। णेडं, आमेलो, केरिसो, एरिसो।

### अम्बिका

"इदीतः पानीयादिषु" (प्रा. १.१८) इत्यतः "ईतः" इति पदमनुवर्त्तते।

### सूत्रार्थः

नीड़, आपीड़, कीदृश तथा ईदृश आदि संस्कृत शब्देषु "दीर्घ-ई" कारस्य स्थानेषु प्राकृते 'ए'-कारः (एत्) भवति।

यथा–

### नीड़म् > णेडं

"नीड़म्" इति स्थिते "एन्नीड़ापीड़कीदृशीदृशेषु" (प्रा. १.१९) इति सूत्रेण 'ई' कारस्य 'ए' कारे "नेड़म्" इति जाते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' इत्यस्य 'ण्' कारे "णेडम्" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे "णेडं" इति रूपं सिद्धम्।

अन्य व्याख्याकारैः "णेड्डं" इति रूपं स्वीकृतम्।

### आपीड़ः > आमेलो

"आपीड़ः" इति स्थिते "आपीड़े मः (प्रा. २.१६) इत्यनेन सूत्रेण 'प्' कारस्य 'म्' कारे "आमीड़" इति स्थिते "डस्य च" (प्रा २. ३३) इत्यनेन सूत्रेण 'ड्' कारस्य 'ल्' कारे, "आमील" इति स्थिते "एन्नीड़ापीड़कीदृशीदृशेषु" (प्रा. १.१९) इत्यनेन सूत्रेण 'ई' कारस्य "ए" कारे "आमेल" इति प्राप्ते "अत ओत् सोः" (प्रा.५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे", "आमेलो" इति रूपं सिद्धम्।

### कीदृशः > केरिसो

"कीदृशः" इति स्थिते "एन्नीड़ापीड़कीदृशीदृशेषु" (प्रा. १.१९) इति सूत्रेण 'ई' कारस्य 'ए' कारे "केदृशः" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'द्' इत्यस्य लोपे "केऋशः" इति स्थिते "क्वचिद्युक्तस्यापि" (प्रा. १.३१) इत्यनेन सूत्रेण 'ऋ' इत्यस्य 'रि' कारे "केरिशः" इति स्थिते "शषोः सः" (प्रा. २.४२) इत्यनेन सूत्रेण 'श्' इत्यस्य 'स्' कारे "केरिस" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इति सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे", "केरिसो" इति रूपं सिद्धम्।

### ईदृशः > एरिसो

"ईदृशः" इति स्थिते "एन्नीड़ापीड़कीदृशीदृशेषु" (प्रा. १.१९) इत्यनेन सूत्रेण "ई" कारस्य "ए" कारे "एदृश" इति स्थिते "कगचजतदपयवां

प्रायो लोपः'' (प्रा. २.२) इत्यनेन सूत्रेण ''द्'' कारस्य लोपे, ''एऋश'' इति स्थिते ''क्वचिद्युक्तस्यापि'' (प्रा. १.३१) इत्यनेन सूत्रेण 'ऋ' कारस्य रि कारे ''एरिश'' इति स्थिते ''शषोः सः'' (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे ''एरिस'' इति स्थिते ''अत ओत् सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने ''सु'' इत्यस्य ''ओत्वे'', ''एरिसो'' इति रूपं सिद्धम्।

## २०. उत ओत् तुण्डरूपेषु

### सुबोधिनी

तुण्डतुल्येषु शब्देषु उकारस्य ओत्त्वं स्यात्।

तुण्डः पुष्करशब्दश्च मुस्तपुस्तकमुद्गराः।

लुब्धकः सुकुमारश्च तुण्डतुल्याः स्युरीदृशाः॥

तोंडं। पोक्खरो। मोत्थं। पोत्थअं। मोग्गरो। लोद्धओ। सोमालो॥ २१॥

### सञ्जीवनी

तुण्डसदृशेषु शब्देषु उतः उकारस्य ओकारः स्यात्। तोंडं, तुण्डम्। पोक्खरो, पुष्करः। ष्कस्कक्षां ख इति ष्कस्य खः। तस्य द्वित्वे वर्गे युजः पूर्व इति कः। मोत्थं, मुस्तम्। स्तस्य थ इति थः। तस्य आदेशत्वाद् द्वित्वे वर्गे युजः पूर्व इति तः। पोत्थअं, पुस्तकम्। स्तस्य थकारादिकं पूर्ववत्। मोग्गरो, मुद्गरः। उपरि लोप इत्यादिना दस्य लोपः। शेषस्य गस्य द्वित्वम्। लोद्धओ, लुब्धकः। सर्वत्र लवरामिति वलोपः। शेषस्य धस्य द्वित्वे वर्गे युजः पूर्व इति दः। कगचादिना कलोपः। सोमालो, सुकुमारः। कगचादिना कलोपः। ततः सन्धा वचामित्थादिना उकारस्य लोपः। हरीद्रादीनां रो ल इति रेफस्य लः।

तुण्डः पुष्करशब्दश्च मुस्तपुस्तकमुद्गराः।

लुब्धकः सुकुमारश्च तुण्डतुल्याः स्युरीदृशाः॥ २१॥

### मनोरमा

तुण्ड इत्येवंरूपेषु आदे रूकारस्यौकारो भवति। तोण्डं। मोत्ता।

पोक्खरो। पोत्थओ। लोद्धओ। कोट्टिमं॥ तुण्ड-मुक्ता-पुष्कर-लुब्धक-कुट्टिमानि रुपग्रहणं संयोगपरोपलक्षणार्थम्।

**अम्बिका**

प्रथमसूत्रं ''आदेरतः'' (प्रा. १.१) इत्यतः ''आदेः'' पदमनुवर्त्तते। सूत्रे 'रूप' शब्दस्य प्रयोगम् ''तुण्डं'' सदृशं संयुक्त व्यञ्जन वर्णानि निमित्तम्, अर्थात् संयुक्तान् व्यञ्जनवर्णान् वोधयितुम्।

**सूत्रार्थः**

''तुण्डम्'' आदि (मुक्ता, पुष्करः पुस्तकम्, लुब्धकः, कुट्टिमम्) तत् सदृशं संयुक्त व्यञ्जनवर्णयुक्त शब्देषु आदिषु विद्यमानेषु ''उ'' कारस्य स्थानेषु प्राकृते ''ओ''कारः (ओत्) भवति।

**यथा-**

**तुण्डम् > तोण्डं**

'तुण्डम्' इति स्थिते ''उत ओत् तुण्डरूपेषु'' (प्रा. १.२०) इत्यनेन सूत्रेण आदि-उ कारस्य' 'ओ' कारे 'तोण्ड इति प्राप्ते ''सोर्बिन्दुनपुंसके'' (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) ''तोण्डं'' इति रूपं सिद्धम्।

**मुक्ता > मोत्ता**

''मुक्ता'' इति स्थिते ''उत ओत् तुण्डरूपेषु'' (प्रा. १.२०) इत्यनेन सूत्रेण आदि-उ कारस्य ''ओ'' कारे ''मोक्ता'' इति स्थिते ''उपरि लोप कगडतदपषसाम् (प्रा. ३.१) इत्यनेन सूत्रेण 'क्' इत्यस्य लोपे ''मोता'' इति प्राप्ते, ''शेषादेशयोर्द्वित्वभनादौ'' (प्रा. ३.५०) इत्यनेन सूत्रेण 'त्' इत्यस्य द्वित्वे ''मोत्ता'' रूपं सिद्धम्।

**पुष्करः > पोक्खरो**

''पुष्करः'' इति स्थिते ''उत ओत् तुण्डरूपेषु'' (प्रा. १.२०) इत्यनेन सूत्रेण ''आदि-उ कारस्य ''ओ'' कारे ''पोष्करः'' इति स्थिते, ''ष्कस्कक्षां खः'' (प्रा. ३.२९) इत्यनेन सूत्रेण 'ष्क्' इत्यस्य 'ख्' कारे ''पोखर'' इति जाते ''शेषादेशयोर्द्वित्वमनादौ'' (प्रा. ३.५०) इत्यनेन सूत्रेण 'ख्'

इत्यस्य द्वित्वे ''पोख्खर'' इति प्राप्ते, ''वर्गेषु युजः पूर्वः'' (प्रा. ३. ५१) इत्यनेन सूत्रेण 'ख्' इत्यस्य 'क्' कारे पोक्खर' इति जाते ''अत् ओत् सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने 'सु' इत्यस्य ''ओत्वे'' ''पोक्खरो'' इति रूपं सिद्धम्।

## पुस्तकम् > पोत्थअं

''पुस्तकम्'' इति स्थिते ''उत ओत् तुण्डरूपेषु'' (प्रा. १.२०) इत्यनेन 'सूत्रेण ''आदि-उ कारस्य'' 'ओ' कारे ''पोस्तकम्'' इति स्थिते, ''स्तस्य थः'' (प्रा. ३.१२) इत्यनेन सूत्रेण 'स्त' इत्यस्य 'थ' कारे पोथकम् इति जाते ''शेषादेशयोर्द्वित्वमनादौ'' (प्रा. ३.५०) इत्यनेन सूत्रेण 'थ्' इत्यस्य द्वित्वे ''पोथ्थकम्'' इति जाते ''वर्गेषु युजः पूर्वः (प्रा. ३.५१) इत्यनेन सूत्रेण 'थ्' इत्यस्य 'त्' कारे ''पोत्थकम्'' इति प्राप्ते ''कगचजतदपयवां प्रायो लोपः'' (प्रा. २.२) इत्यनेन सूत्रेण 'क्' इत्यस्य लोपे ''पोत्थअ'' इति जाते सोर्बिन्दुनपुंसके'' (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके ''सु'' इत्यस्य बिन्दुत्वे (अनुस्वारे) ''पोत्थअं'' रूपं सिद्धम्।

## लुब्धकः > लोद्धओ

''लुब्धकः'' इति स्थिते ''उत ओत् तुण्डरूपेषु (प्रा. १.२०) इत्यनेन सूत्रेण ''आदि-उ कारस्य'' 'ओ'कारे ''लोब्धक'' इति स्थिते, ''सर्वत्र लवराम्'' (प्रा. ३.३) इत्यनेन सूत्रेण 'ब्' कारस्य लोपे ''लोधक'' इति स्थिते ''शेषादेशयोर्द्वित्वमनादौ'' (प्रा. ३.५०) इत्यनेन सूत्रेण 'ध' इत्यस्य द्वित्वे ''लोध्धक'' इति जाते ''वर्गेषु युजः पूर्वः'' (प्रा. ३.५१) इत्यनेन सूत्रेण 'ध्' इत्यस्य 'द्' कारे ''लोद्धक'' इति जाते ''कगचजतदपयवां प्रायो लोपः'' (प्रा. २.२) इत्यनेन सूत्रेण ''क्'' इत्यस्य लोपे ''लोद्धअ'' इति प्राप्ते ''अत ओत् सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने सु'' इत्यस्य ओत्वे ''लोद्धओ'' इति शब्दं सिद्धम्।

## कुट्टिमम् > कोट्टिमं

''कुट्टिमम्'' इति स्थिते ''उत ओत् तुण्डरूपेषु'' (प्रा. १.२०) इत्यनेन सूत्रेण 'आदि-उ' कारस्य 'ओ' कारे ''कोट्टिमम्'' इति जाते

"सोर्बिन्दुनपुंसके" इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "कोट्टिमं" इति रूपं सिद्धम्।

## २१. उलूखले ल्वा वा

### सुबोधिनी

उलूखलशब्दे ल्वा लूकारेण सह उकारस्य ओत्त्वं वा स्यात्। ओहलं, उलूइलं॥

### सञ्जीवनी

उलूखलशब्दे ल्वा लूकारेण सह आदेः उकारस्य ओत्त्वं वा भवति। ओहलं, उलूहलं। खघथादिना खस्य हः॥

### प्राकृतमञ्जरी

लूकारेण सह स्याद् वा पुनरोत्त्वमुलूखले।
ओहलं तदु विदुः सन्तः पक्षे विदुरूलूहलम्॥ २१॥

### मनोरमा

उलूखलशब्दे ल शब्देन सह उकारस्यौकारो भवति वा, ओखलं, उलूखलं।

### अम्बिका

"आदेरतः" (प्रा. १.२०) इत्यतः "आदेः" तथा "उत ओत् तुण्डरूपेषु" (प्रा. १.२०) इत्यतः "ओत्" पदद्वयमनुवर्त्तते, सूत्रस्थ "ल्वा" शब्दः "लू" शब्दस्य तृतीया विभक्ति एकवचनम्।

### सूत्रार्थः

"उलूखल" इति संस्कृत शब्दस्य 'लू' भागेन सह "आदि-उ" (उत्) कारस्य विकल्पेन प्राकृते "ओ" कारः भवति।

### यथा–

उलूखलम् > ओहलं

"उलूखलम्" इति स्थिते "उलूखले ल्वा वा" (प्रा. १.२१) इत्यनेन सूत्रेण "उलू" एतयोः 'ओ' कारे "ओखलम्" इति जाते "खघथ

धभां हः" इत्यनेन सूत्रेण 'ख्' इत्यस्य 'ह्' कारे "ओहल" इति जाते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "ओहलं" इति रूपं सिद्धम्।

विकल्प अभावपक्षे तु "उलूहलं"

## २२. अन्मुकुटादिषु

### सुबोधिनी

एष्वादेरूतोऽकारादेशः स्यात्।

मुकुटं मुकुलं चैव सौकुमार्य्य तथोपरि।

शब्दज्ञा गुरूवाह्वादीन् मुकुटादीन् प्रचक्षते॥

मउडं। मउलं। सोअमल्लं। अवरि। गरूअं। 'बाहुशब्देऽप्युकारस्य विकल्पादत्त्वमिष्यते'। बाहा, बाहू॥२३॥

### सञ्जीवनी

मुकुटादिषु शब्देषु आदेरूकारस्य अत् अकारादेशः स्यात्। मउडं, मुकुटम्। कगचादिना कलोपः। टो ड इति टस्य डः। मउलं, मुकुलम्। सोअमल्लं, सौकुमार्यम्। कगचादिना कलोपः। औत ओदिति ओत्त्वम्। अदातो यथादिषु वेति आकारस्य अकारः। पर्यस्तपर्याणसौकुमार्येषु लः इति र्यस्य लः। तस्य आदेशत्वाद् द्वित्वम्। अवरि, उपरि। पो व इति वस्य वः। गरूअं, गुरूकम्। 'बाहुशब्देऽप्युकारस्य विकल्पादत्त्वमिष्यते'। बाहा, बाहु।

मुकुटं मुकुलं चैव सौकुमार्यं तथोपरि।

### प्राकृतमञ्जरी

आदेरूतो भवेदत्त्वं पदेषु मुकुटादिषु।

मुकुटं मउड़ं विद्यान्मुकुलं मउलं तथा॥

मुकुटं मुकुलं गुर्वी सुकुमारी युधिष्ठरः।

अगुरूपरि शब्दस्य मुकुटादिरयं गणः॥२२॥

**मनोरमा**

"मुकुट" इत्येवमादिष्वादेरूकारस्य स्थाने अकारो भवति। मउडं, गरूअं, गरूई, जहिट्ठिलो, सोअमल्लं, अवरि॥ मुकुट-मुकुल-गुरू-गुर्वी-युधिष्ठिर-सौकुमार्य-उपरयः।

**अम्बिका**

"आदेरतः" (प्रा. २.२) इत्यतः "आदेः" तथा "उत ओत् तुण्डरूपेषु (प्रा. १.२०) इति सूत्रतः "उतः" इति पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

मुकुटादि (मुकुलम्-गुरू-गुर्वी-युधिष्ठिरः-सौकुमार्यम्-उपरि) संस्कृत शब्दानाम् आदि तथा मध्यस्थ 'उ' कारस्य स्थानेषु प्राकृते "ह्रस्व-अ" कारः भवति।

**यथा-**

**मुकुटम् > मउडं**

"मुकुटम्" इति स्थिते "अन्मुकुटादिषु" (प्रा. १.२२) इत्यनेन सूत्रेण आदि "उ" कारस्य "अ" कारे "मकुटम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "क्" कारस्य लोपे "मउटम्" इति स्थिते "टोडः" इत्यनेन सूत्रेण 'ट्' इत्यस्य 'ड्' कारे "मउडम्" इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण "मउडं" इति रूपं सिद्धम्।

**मुकुलम् > मउलं**

"मुकुलम्" इति स्थिते "अन्मुकुटादिषु" (प्रा. १.२२) इत्यनेन सूत्रेण 'आदि-उ' कारस्य 'अ-कारे "मकुलम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः (प्रा. २.२) इत्यनेन सूत्रेण 'क्' इत्यस्य लोपे "मउलम्" इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "मउलं" इति रूपं सिद्धम्।

### गुरूकम् > गरूअं

"गुरूकम्" इति स्थिते "अन्मुकुटादिषु" (प्रा. १.२२) इत्यनेन सूत्रेण "आदि-उ" कारस्य 'अ'-कारे "गरूक्म्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' कारस्य लोपे "गरूअम्" इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "गुरूअं" इति रूपं सिद्धम्।

### गुर्वी > गरई

"गुर्वी" इति स्थिते अन्मुकुटादिषु" (प्रा. १.२२) इत्यनेन सूत्रेण "आदि-उ" कारस्य "अ-कारे" "गर्वी" इति स्थिते, रेफस्य 'र' कारे "गरवी" इति स्थिते, कगचजतदपयवां प्रोयो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'व्' कारस्य लोपे "गरई" इति रूपं सिद्धम्।

### युधिष्ठिरः > जहिट्ठिलो

"युधिष्ठिरः" इति स्थिते "अन्मुकुटादिषु" (प्रा. १.२२) इत्यनेन सूत्रेण "आदि-उ" कारस्य "अ" कारे "आदेर्यो जः" (प्रा. २.३१) इत्यनेन आदि 'य्' कारस्य 'ज्' कारे "जधिष्ठिरः" इति जाते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'ध्' इत्यस्य 'ह्' कारे ष्ठस्य ठः (प्रा. ३.१०) सूत्रेण 'ष्ठ' इत्यस्य 'ठ्' कारे, "जहिठिर" इति स्थिते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'ठ' इत्यस्य द्वित्वे, "वर्गेषु युजः पूर्वः (प्रा. ३.५१) इत्यनेन सूत्रेण 'ठ्' कारस्य 'ट्' कारे जहिट्ठिर" इति स्थिते "हरिद्रादीनां रो लः" (प्रा. २.३०) इत्यनेन सूत्रेण 'र्' इत्यस्य 'ल्' कारे "जहिट्ठिल" इति स्थिते "अत ओत् सोः" (प्रा. ५.३१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओ" कारे "जहिट्ठिलो" इति रूपं सिद्धम्।

### सौकुमार्यम् > सोअमल्लं

"सौकुमार्यम्" इति स्थिते "औत ओत्" (प्रा. १.४१) इत्यनेन सूत्रेण "औ" कारस्य 'ओ' कारे "सोकुमार्यम्" इति स्थिते "अन्मुकुटादिषु (प्रा. १.२२) इत्यनेन 'उ'-कारस्य 'अ' कारे "सोकमार्यम्" इति जाते,

"कगचजतदपयवां प्रायो लोपः (प्रा. २.२) इत्यनेन सूत्रेण 'क्' इत्यस्य लोपे "सोअमार्यम्" इति जाते "पर्यस्तपर्यायसौकुमार्येषु लः" (प्रा. ३.२१) इति सूत्रेण संयुक्त व्यञ्जन समुदाय 'र्य्' स्थाने 'ल' इति प्राप्ते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'ल' इत्यस्य द्वित्वे "सोअमाल्लम्" इति स्थिते अदातो यथादिषु वा (प्रा. १.१०) इत्यनेन सूत्रेण 'आ' कारस्य अकारे "सोअमल्लम्" इति प्राप्ते "मोर्बिन्दुः" (प्रा. ४.१२) इत्यनेन सूत्रेण 'म्' इत्यस्य बिन्दुत्वे (अनुस्वारे) "सोअमल्लं" इति रूपं सिद्धम्।

### उपरि > अवरि

"उपरि" इति स्थिते "अन्मुकुटादिषु" (प्रा. १.२२) इत्यनेन सूत्रेण "आदि-उ" कारस्य 'अ' कारे "अपरि" इति स्थिते "पोवः" (प्रा. २.१५) इत्यनेन "प्" कारस्य "व्" कारे "अवरि" इति रूपं सिद्धम्।

## २३. इत्पुरूषे रोः

### सुबोधिनी

अत्र रूकार उकारस्य इत्त्वं स्यात्। पुरिसो॥

### सञ्जीवनी

अत्र पुरूषशब्दे रूकारे उकारस्य इत् इकारः स्यात्। पुरिसो, पुरूषः। शषो। शषो सः इति षस्य सः॥

### प्राकृतमञ्जरी

योऽसौ पुरूष शब्देऽस्मिन् रेफस्तत्र स्थितस्य तु।
उकारस्य भवेदित्त्वं पुरूषः पुरसिो भवेत्॥
चोद्यते ननु सूत्रेऽस्मिन्नधिकारो विरुध्यते।
अतीतमपि यत् सूत्रमितेस्त इति तत्र च॥
स्यादेतत् परिहर्त्तम्यं यत् सूत्रे त्वत्र चोच्यते।
"एकवारमनुग्राह्यं स्खलितं क्षम्यतामिति॥"
इतेस्त इति यच्चोद्यं तत्राभासो न बाध्यते।
अन्यच्चाहत्य निर्देशो द्वयोर्नेहास्ति दूषणम्॥

एकस्मिन्नेव शब्दे स्यादिति यद्विवृतं मुखे।
प्रायो वृत्त्या तदेतावान्नेव बाधविधिर्भरः॥ २३॥

मनोरमा

"पुरूष" शब्दे यो "रू' स्तस्य 'उ' कारस्य 'इ' कारो भवति। पुरिसो।

अम्बिका

"उत ओत् तुण्डरूपेषु" (प्रा. १.२०) इति सूत्रतः "उतः" पद मनुवर्त्तते, "आदेरतः" (प्रा. १.१) इति सूत्रतः "आदेः" पदस्यानुवृत्तिर्न भवति।

सूत्रार्थः

'पुरूषः इति संस्कृत शब्दस्य 'रू' इत्यस्य 'उ' (उत्) कारस्य स्थाने प्राकृते 'इ' (इत्) कारः भवति।

यथा–

पुरूषः > पुरिसो

'पुरूषः इति स्थिते "इत्पुरूषे रोः" (प्रा. १.२३) इत्यनेन "रु" इत्यस्य "उ" कारस्य "इ" कारे "पुरिष" इति स्थिते, "शषोः सः" (प्रा. २.४२) इत्यनेन सूत्रेण 'ष्' इत्यस्य 'स' कारे "पुरिस" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य ओत्वे" "पुरिसो" इति रूपं सिद्धम्।

२४. उदूतो मधूके

सुबोधिनी

एषु ऊकारस्य उकारः स्यात्।
मधूकमूर्खकूष्माण्डशूद्रोर्द्धपूर्त्तमूर्त्तयः।
भूर्जशून्योमिचूर्णोणा मधूकादय ईदृशाः॥

महुओ। मुक्खो। कुम्हण्डं। सुद्दो। उद्धं। पुत्तो। मुत्ती। भुजं। सुण्णं। उम्मओ। चूण्णं। उष्णा। 'मूल्यताम्बूलयोस्त्वोत्त्वमूकारस्येष्यते बुधैः' मोल्लं। तंबोल्लं।

## सञ्जीवनी

एषु शब्देषु ऊतः ऊकारस्य उत् उकारः स्यात्। महुओ, मधूकः। खघथादिना धस्य हः। कस्य कगचादिना लोपः। मुक्खो, मूर्ख। सर्वत्र लवरामिति रेफस्य लोपः। खस्य शेषस्य द्वित्वम्। तस्य वर्गे युजः पूर्व इति कः। कुम्हण्डं, कूष्माण्डम्। ष्मपक्ष्मविस्मयेषु म्हः इति ष्मस्य म्हः। अदातो यथादिषु वेति आकारस्य अकारः। सुद्दो, शूद्रः। सर्वत्र लवरामिति रेफलोपः। शेषस्य शेषादेशादिना द्वित्वम्। शषोः स इति शस्य सः। उद्धं, ऊर्ध्वं। सर्वत्र लवरामिति रेफवकारयोर्लोपः। ततो धस्य द्वित्वे वर्गे युजः पूर्व इति दः। पूत्तो, पूर्त्तः। रेफलोपः शेषद्वित्वं चाग्वत्। मुत्ती, मूर्तिः। सर्वत्र लवरामिति रेफलोपः। शेषस्य तस्य द्वित्वम्। सुभिस्सुप्सु दीर्घ इति इकारस्य दीर्घः। अन्त्यस्य हल इति सुलोपः। भुजं भूर्जं। रेफलोपादिकं पूर्ववत्। सुण्णं, शून्यम्। अधो मनयामिति यलोपः। नो णः इति नस्य णः। ततः शेषादेशादिना द्वित्वम्। उम्मओ, ऊर्म्मयः। सर्वत्र लवरामिति रेफलोपः। ततो जसो वेति जसः ओत्वम्। चुण्णं चूर्णम्। रेफलोपादिकं पूर्ववत्। उण्णा, ऊर्णा।

**मधूकमूर्खकूष्माण्डशूद्रोर्ध्वपूर्त्तमूर्तयः।**

**भूर्जशून्योर्मिचूर्णोर्णा मधूकादय ईदृशाः॥**

**मूल्यताम्बूलयोस्त्वोत्त्वमूकारस्येष्यते बुधैः।**

मोल्लं, मूल्यं। अधोमनयामिति यलोपः। ततः शेषस्य लस्य द्वित्वम्। तंबोलं, ताम्बूलम्। मस्यानुस्वारे अदातो यथादिषु वेति आकारस्य अकारः॥

## प्राकृतमञ्जरी

**योऽसौ मधूकशब्देऽस्मिन्नूकारः सम्प्रतिष्ठितः।**

**उकारो विहितस्तस्य मधूको महुओ मतः॥**

## मनोरमा

''मधूक'' शब्दे ''ऊ'' कारस्य ''उ'' कारो भवति। महुअं।

## अम्बिका

अनुवृत्ति विहिनमिदं सूत्रम्।

**सूत्रार्थः**

"मधूक" इति संस्कृत शब्दस्य दीर्घ ऊ" (ऊत्) कारस्य स्थाने प्राकृते "ह्रस्व-अ" कारः भवति।

**मधूकः > महुओ**

"मधूकः" इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'ध्' कारस्य 'ह्' कारे "महूकः' इति जाते "उदूतो मधूके" (प्रा. १.२४) इत्यनेन सूत्रेण "ऊ" कारस्य 'उ' कारे "महुक" इति प्राप्ते "कगचजतदपयवां प्रायो लोपः (प्रा. २.२) इत्यनेन सूत्रेण 'क्' इत्यस्य लोपे "महुअ" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे", महुओ" इति रूपं सिद्धम्।

**समन्वयः**

"संञ्जीवनी" व्याख्यायाम् "मधूकादिषु" पाठं स्वीक्रियते, प्राकृते एतादृशः वहवः शब्दः लभ्यते। तस्मात् कारणात् शब्द साधुत्वं पर्यालोच्य "मधूकादिषु पाठं ग्रहणीयं युक्तम् इति स्व मतम्।

**२५. अद् दुकूले वा लस्य द्वित्वम्**

**सुबोधिनी**

दुकूलशब्दे ऊकारस्य अकारो लस्य च द्वित्त्वं युगपद्वा भवति। दुअल्लं, दुऊलं॥

**सञ्जीवनी**

दुकूलशब्दे ऊकारस्य अकारो लस्य द्वित्वं च युगपद् विकल्पेन भवति। दुअल्लं। पक्षे कगचादिना कलोपे दुकूलमिति॥ २६॥

**प्राकृतमञ्जरी**

अत्त्वमूतो दुकूले वा स्यात्तदा लस्य च द्विता।
दुकूलं तु दुअल्लं वा दुऊलं वा निगद्यते॥ 25॥

**मनोरमाः**

दुकूल शब्दे 'ऊ' कारस्याकारो भवति वा। तत्संयोगेन लकारस्य द्वित्वम् दुअल्लं दुऊलं।

अम्बिका

उदूतो मधूके" (प्रा. १.२४) इति सूत्रात् "ऊतः पदमनुवर्त्तते।

सूत्रार्थः

"दुकूल" इति संस्कृत शब्दस्य 'ऊ' (ऊत्) कारस्य स्थाने प्राकृते विकल्पेन "अ" (अत्) कारः तथा परवर्त्ति 'ल्' विकल्पेन द्वित्व भवति। 'ऊ' कारस्य स्थाने 'अ' कारे 'ल्' इत्यस्य द्वित्वं युक्तम्, अन्यथा न द्वित्वम्।

दुकूलम् > दुअल्लं, दुऊलं

"दुकूलम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन 'क्' इत्यस्य लोपे "दुऊलम्" इति स्थिते "अद् दुकूले वा लस्य द्वित्वम्" (प्रा. १.२५) इत्यनेन सूत्रेण "ऊ" कारस्य 'अ' कारे तथा 'ल्' इत्यस्य द्वित्वे, "दुअल्ल" इति स्थिते, "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे "दुअल्लं" इति रूपं सिद्धम्। अपरपक्षे "दुऊलं" इति रुपं सिद्धम्।

२६. एन्नूपुरे

सुबोधिनी

ऊकारस्य एत्वं स्यात्। णेउरं॥

सञ्जीवनी

नूपुरशब्दे ऊकारस्य एत्त्वं स्यात्। णेउरं, नूपुरम्। नो ण इति नस्य णः। कगचादिना पकारस्य लोपः॥ २७॥

प्राकृतमञ्जरी

ऊतो नूपूरशब्देऽस्मिन्नेकारस्तु विधीयते।
आदेशत्वेन तेनेह नूपुरो णेउरो मतः॥ २६॥

मनोरमा

नूपुर शब्दे ऊकारस्य एकारो भवति णेउरं।

अम्बिका

"उदूतो मधुके" (प्रा. १.२४) इति सूत्रात् "ऊतः" इत्यस्य अनुवृत्तिः भवति।

सूत्रार्थः

"नूपुरम्" इति संस्कृत शब्दस्य "ऊ" (ऊत्) कारस्य स्थाने प्राकृते "ए" (एत्) कारः भवति।

यथा—

नूपुरम् > णेउरं

"नूपुरम्" इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे, "णूपुरम्" इति जाते "एन्नूपुरे" (प्रा. १.२६) इत्यनेन सूत्रेण "ऊ" कारस्य 'ए' कारे "णेपुरम्" इति जाते "कगचज तदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन "प्" कारस्य लोपे "णेउरम्" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके सु इत्यस्य बिन्दुत्वे (अनुस्वारे) "णेउरं" इति रूपं सिद्धम्।

२७. ऋतोऽत्

सुबोधिनी

ऋकारस्य अत्त्वं स्यात्। तण्हा, तृष्णा॥

सञ्जीवनी

ऋकारस्य अत्त्वं स्यात्। तण्हा, तृष्णा। ह्नस्नष्णक्ष्णश्नां ण्ह इति ण्हः॥

प्राकृतमञ्जरी

ऋकारस्य त्वकारः स्यादुत्सर्गेण पदे पदे।
वृद्धं बद्धं मृदु मउ कृष्णः कण्हो मृड़ो मड़ो॥

मनोरमा

आदेः ऋकारस्याकारो भवति, तणं, घणा, मअं, कअं, बद्धो, वसहो॥ तृण-घृणा-मृत-कृत-बृद्ध-वृषभाः॥

अम्बिका

प्रथम सूत्रं "आदेरतः" (प्रा. १.२७) इत्यतः "आदेः" पदमनुवर्त्तते।

**सूत्रार्थः**

तृणम्, घृणा, मृतम्, कृतम्, वृद्धः वृषभः आदि संस्कृत शब्दानाम् आदि "ऋ" कारस्य (ऋत्) स्थाने प्राकृते "अ" (अत्) कारः भवति।

**यथा–**

**तृणम् > तणं**

"तृणम्" इति स्थिते "ऋतोऽत्" (प्रा. १.२७) इत्यनेन सूत्रेण इादि 'ऋ' कारस्य 'अ' कारे "तणम्" इति स्थिते, "सोर्बिन्दुनपुंसके" (प्रा. 5.30) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "तणं" इति रूपं सिद्धम्।

**घृणा > घणा**

"घृणा" इति स्थिते "ऋतोऽत्" (प्रा. १.२७) इत्यनेन सूत्रेण आदि "ऋ" कारस्य "अ" कारे "घणा" इति रूपं सिद्धम्।

**मृतम् > मअं**

"मृतम्" इति स्थिते "ऋतोऽत्" (प्रा. १.२७) इत्यनेन सूत्रेण आदि "ऋ" कारस्य "अ" कारे "मतम्" इति जाते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'त्' इत्यस्य लोपे "मअम्" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "मअं" इति रूपं सिद्धम्।

**कृतम् > कअं**

"कृतम्" इति स्थिते "ऋतोऽत्" (प्रा. १.२७) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य "अ" कारे "कतम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "त्" कारस्य लोपे "कअम्" इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "कअं" इति रूपं सिद्धम्।

**बृद्धः > बद्धो**

"बृद्धः" इति स्थिते "ऋतोऽत्" (प्रा. १.२७) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य "अ" - कारे "बद्धः" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "बद्धो" इति रूपं सिद्धम्।

**वृषभः > वसहो**

"वृषभः" इति स्थिते "ऋतोऽत्" (प्रा. १.२७) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य "अ"-कारे "वषभ" इति स्थिते, "शषोः सः" (प्रा. २.४२) इत्यनेन सूत्रेण 'ष्' कारस्य 'स्' कारे "वसभ" इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण "भ्" इत्यस्य "ह्" कारे "वसह" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इति सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "वसहो" इति रूपं सिद्धम्।

## २८. इदृष्यादिषु

### सुबोधिनी

एषु ऋत इत्त्वं स्याद्वा

**ऋषिर्मसृणधृष्टौ च वृषभः पृथुलो दृढः।**

**मृगो गृष्टिः कृतो गृद्ध ऋष्याद्या एवमादयः॥**

इसी। मसिणं। धिट्ठो। विसहो। पिहुलं। दिढो। मिओ। गिट्ठी। किअं। गिद्धो। इत्वाभावपक्षे ऋषिशब्दे रित्वम्, अन्यत्र अत्वमेव। व्यवस्थितविकल्पोऽयम्, तेन

**भृङ्गभृङ्गारशृङ्गाराः कृपाणकृपणकृपाः।**

**शृङ्गालहृदये वृष्टिदृष्टी इत्येषु नित्यमिः॥**

भिंगो। भिंगालो। सिंगालो। किवाणो। किवणो। किवा। सिआलो। हिअअं। विट्ठि। दिट्ठी॥

### सञ्जीवनी

ऋष्यादिषु शब्देषु ऋकारस्य इत्त्वं स्याद् वा। इसी, ऋषिः। शषोः

स इति षस्य सः। सुभिस्सुप्सु दीर्घ इति इकारस्य दीर्घत्वम्। ततः अन्त्यस्य हल इति सुलोपः। व्यवस्थितविकल्पोऽयम्, तेन इत्त्वाभावपक्षेऽपि ऋषिशब्दे इत्त्वमेव, अन्यत्र सर्वत्र अत्त्वम्। मसिणं, मसृणम्। पक्षे मसणं। ऋतोऽदिति अत्त्वम्। एवं धिट्ठो, धट्ठो, धृष्टः। ष्टस्य ठः इति ठः, तस्य द्वित्वे वर्गे युजः, पूर्व इति टः। विसहो, वसहो; पिहुलं, पहुलं। वृषभपृथुलयोः। खघथादिना थभयोर्हत्वम्। दिढो, दृढो, दृढः। मिओ, मओ, मृगः। गिट्ठी, गट्ठी, गृष्टिः। पूर्ववत् षत्वं द्वित्वं च, किअं, कअं, कृतम्। कगचादिना तलोपः। गिद्धो, गद्धो गृध्रः। सर्वत्र लवरामिति रेफलोपः। शेषस्य धस्य द्वित्वे वर्गे युजः पूर्व इति दः।

**ऋषिर्मसृणधृष्टौ च वृषभः पृथुलो दृढः।**
**मृगो गृष्टिः कृतं गृध्र ऋष्याद्या एवमादयः॥**
**भृङ्गभृङ्गारशृङ्गाराः कृपाणः कृपणः कृपा।**
**शृगालहृदये वृष्टिदृष्टी इत्येषु नित्यमित्॥**

भिंगो, भृङ्गः। नङोर्हलीति ङस्य बिन्दुः। तस्य कपि तद्वर्ग्यान्त इति वा ङत्वम्। भिङ्गारो, भृङ्गारः। सिङ्गारो शृङ्गारः। किवाणो, किवणो, कृपाणकृपणयोः। किवा कृपा। पो व इति वः। सिआलो, शृगालः। हिअअं, हृदयम्। कगचादिना दयोर्लोपः। विट्ठी, दिट्ठी वृष्टिदृष्टयोः। ष्टस्य ठः, तस्य द्वित्वे वर्गे युजः पूर्व इति ठः॥

## प्राकृतमञ्जरी

**ऋष्वादिषु पदेष्वित्त्वमृकारस्य विधीयते।**
**तस्मादृषिरिसी वाच्यो दृष्टिर्दिट्ठी कृशः किसो॥**
**ऋषिर्दृष्टिः क्रशो घृष्टिः क्रपा शृङ्गार वृश्चिकाः।**
**मृदङ्गो हृदयं भृङ्गः शृगालक्रति सृष्टयः॥**
**विसृष्टश्च मृगस्तद्वद् भृत्यश्च कसरस्तथा।**
**आकृतिः प्रकृतिश्चैव स्यादृष्यादिरयं गणः॥**

## मनोरमा

ऋष्यादिषु शब्देषु आदेः - "ऋ" कारस्य इकारो भवति। इसी,

विसी, गिट्ठी, दिट्ठी, सिट्ठी, सिङ्गारो, मिअंको, भिङ्गो, भिङ्गारो, विइण्हो, विहिअं, किसरो, किच्चा, विच्छुओ, सिआलो, किई, किवा॥ ऋषि-वृषि-गृष्टि-दृष्टि-सृष्टि-शृङ्गार-मृगाङ्क-भृङ्ग-भृङ्गार-हृदय-वितृष्णा-वृंहित-कृशर-कृत्या-वृश्चिक-शृगाल-कृति-कृषि-कृपाः॥

**अम्बिका**

"आदेरतः" (प्रा. १.१) इत्यतः "आदेः" "ऋतोडत्" (प्रा. १.२७) इत्यतः "ऋतः", पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

ऋषि आदि (वृषि, गृष्टि, दृष्टि, सृष्टि, शृङ्गार, मृगाङ्क, भृङ्ग, भृङ्गार, हृदय, वितृष्ण, वृंहित, कृशर, कृत्या, वृष्चिक, शृगाल, कृति, कृषि, कृपा) संस्कृत शब्दानाम् आदि "ऋ" कारस्य स्थाने प्राकृते 'इ' कारः (इत्) भवति।

**ऋषिः > इसी**

"ऋषिः" इति स्थिते "इदृष्यादिषु" (प्रा. १.२८) इत्यनेन सूत्रेण आदि "ऋ" कारस्य "इ" कारे "इषि" इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'ष्' कारस्य 'स्' कारे "इसि" इति स्थिते, "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण इदन्तस्य दीर्घे "इसी" इति रूपं सिद्धम्।

**वृषिः > विसी**

"वृषिः" इति स्थिते "इदृष्यादिषु" (प्रा. १.२८) इत्यनेन सूत्रेण आदि - "ऋ" कारस्य "इ" कारे "विषि" इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण "ष्" कारस्य 'स्' कारे "विसि" इति प्राप्ते "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण इदन्तस्य दीर्घे "विसी" इति रूपं सिद्धम्।

**गृष्टिः > गिट्ठी**

"गृष्टिः" इति स्थिते "इदृष्यादिषु" (प्रा. १.२८) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य 'इ' कारे "गिष्टि" इति स्थिते "ष्टस्य ठः" (प्रा. ३.१०) इत्यनेन सूत्रेण 'ष्ट्' इत्यस्य 'ठ्' कारे "गिठि" इति स्थिते

"शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "ठ्" इत्यस्य द्वित्वे "गिठ्ठि" इति जाते "वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इत्यनेन सूत्रेण "ठ्" इत्यस्य "ट्" कारे "गिट्ठि" इति प्राप्ते "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण इदन्तस्य दीर्घत्वे "गिट्ठी" इति रूपं "सिद्धम्"।

## दृष्टिः > दिट्ठी

"दृष्टिः" इति स्थिते "इदृष्यादिषु" (प्रा. १.२८) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य "इ" कारे "दिष्टि" इति स्थिते "ष्टस्य ठः" (प्रा. ३.१०) इत्यनेन सूत्रेण "ष्ट्" इत्यस्य "ठ्" कारे "दिठि" इति स्थिते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "ठ्" इत्यस्य द्वित्वे "दिठ्ठि" इति स्थिते "वर्गैषु युजः पूर्वः" (प्रा. ३.५१) इत्यनेन सूत्रेण "ठ्" इत्यस्थ "ट्" कारे, दिट्ठि इति प्राप्ते "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण इदन्तस्य दीर्घत्वे "दिट्ठी" इति रूपं सिद्धम्।

## सृष्टिः > सिट्ठी

"सृष्टिः" इति स्थिते "इदुष्यादिषु" (प्रा. १.२८) इत्यनेन सूत्रेण आदि "ऋ" कारस्य "इ" कारे "सिष्टि" इति स्थिते, "षृस्य ठः" (प्रा. ३.१०) इत्यनेन सूत्रेण 'ष्ट्' इत्यस्य 'ठ्' कारे "सिठि" इति स्थिते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'ठ्' कारस्य द्वित्वे, "सिठ्ठि" इति जाते, "वर्गेषु युजः पूर्वः" (प्रा. १.२८) इत्यनेन सूत्रेण "ठ्" इत्यस्य "ट्" कारे "सिट्ठि" इति प्राप्ते, "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण इदन्तस्य दीर्घत्वे "सिट्ठी" इति रूपं सिद्धम्।

## शृङ्गारः > सिंगारो

"शृङ्गारः" इति स्थिते "इदृष्यादिषु" (प्रा. १.२८) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य "इ" कारे "शिङ्गार" इति स्थिते "शषोः सः" (प्रा. २.८३) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे "सिङ्गार" इति स्थिते "ययि तद्वर्गान्तः" (प्रा. ४.१७) इत्यनेन सूत्रेण विकल्पेन ययि परे वर्गस्य पञ्चमवर्णस्य अनुस्वारे "सिंगार" इति स्थिते "अत ओत् स्मोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे" "सिंगारो इति रूपं सिद्धम्।

### मृगाङ्कः > मिअंको मिअङ्को

''मृगाङ्कः'' इति स्थिते ''इदृष्यादिषु'' (प्रा. १.२८) इत्यनेन सूत्रेण ''आदि-ऋ'' कारस्य ''इ'' कारे ''मिगाङ्क'' इति स्थिते ''कगचजतदपयवां प्रायो लोपः'' (प्रा. २.२) इत्यनेन सूत्रेण 'ग' कारस्य लोपे ''मिआङ्क'' इति स्थिते, ''सन्धाववचामज्लोपविशेषा वहुलम्'' (प्रा. ४.१) इत्यनेन सूत्रेण सन्ध्यस्थ ''आ'' कारस्य 'अ' कारे (अच् विशेषे) ''मिअङ्कः'' इति जाते, ''ययि तद्वर्गान्तः'' (प्रा. ४.१७) इत्यनेन सूत्रेण वर्गस्य पञ्चमवर्णस्य अमावपक्षे, बिन्दुत्वे (अनुस्वारे), ''मिअंक'' इति जाते, अत ओत् सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने ''सु'' इत्यस्य ''ओत्वे'', मिअंको'' इति रूपं सिद्धम्।

### भृङ्गः > भिङ्गो

भृङ्गः'' इति स्थिते ''इदृष्यादिषु'' (प्रा. १.२८) इत्यनेन सूत्रेण ''आदि-ऋ'' कारस्य ''इ'' कारे ''भिङ्ग'' इति स्थिते, ''अत ओत् सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने ''सु'' इत्यस्य ''ओत्वे'', भिङ्गो'' इति रूपं सिद्धम्।

### भृङ्गारः > भिङ्गारो

भृङ्गारः'' इति स्थिते ''इदृष्यादिषु'' (प्रा. १.२८) इत्यनेन सूत्रेण ''आदि-ऋ'' कारश्स्य ''इ'' कारे ''भिङ्गार'' इति स्थिते, ''अत ओत् सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य ''ओत्वे'', ''भिङ्गारो'' इति रूपं सिद्धम्।

### हृदयम् > हिअअं

''हृदयम्'' इति स्थिते ''इदृष्यादिषु'' (प्रा. १.२८) इत्यनेन सूत्रेण ''आदि-ऋ कारस्य'' ''इ'' कारे हिदय'' इति स्थिते ''कगचजतदपयवां प्रायो लोपः'' (प्रा. २.२) इत्यनेन सूत्रेण द् य् कारयोः लोपे ''हिअअ'' इति प्राप्ते ''सोर्विन्दुनपुंसके'' इत्यनेन सूत्रेण नपुंसके ''सु'' इत्यस्य विन्दुत्वे (अनुस्वारे) हिअअं'' रूपं सिद्धम्।

### वितृष्णः > विइण्हो

''वितृष्णः'' इति स्थिते, ''इदृष्यादिषु'' (प्रा. १.२८) इत्यनेन सूत्रेण

'ऋ' कारस्य 'इ' कारे वितिष्ण" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'त्' कारस्य लोपे "विइष्ण" इति जाते 'ह्वस्नष्णक्ष्णश्नां ण्हः" (प्रा. ३.३३) इत्यनेन सूत्रेण "ष्ण्" इत्यस्य "ण्ह्" कारे "विइण्ह" इति 'प्राप्ते, "अत ओत्' सोः" (प्रा. ५.१) सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे", विइण्हो" इति रूपं सिद्धम्।

## बृंहितम् > विहिअं

"बृंहितम्" इति स्थिते "इदृष्यादिषु" (प्रा. १.२८) इत्यनेन सूत्रेण आदि-ऋ" कारस्य "इ" कारे "विहितम्" इति जाते कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "त्" कारस्य लोपे विहिअ" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इयनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "विहिअं" इति रूपं सिद्धम्।

## कृशरः > किसरो

"कृशरः" इति स्थिते "इदृष्यादिषु"' (प्रा. १.२८) इत्यनेन सूत्रेण "आदि-ऋ कारस्य" "इ" कारे "किशर" इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे "किसर" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने "सु" इत्यस्य ओत्वे "किसरो" इति रूपं सिद्धम्।

## वृश्चिकः > विच्छुओ

अस्य प्रक्रियां "उदिक्षुवृश्चिकयोः" (प्रा. १.१५) इति सूत्रं प्रसङ्गे द्रष्टव्यम्।

## कृत्या > किच्चा

"कृत्या" इति स्थिते "इदृष्यादिषु" (प्रा. १.२८) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य "इ" कारे "कित्या" इति स्थिते, "त्यथ्यद्यां चछजाः" (प्रा. ३.२७) इत्यनेन सूत्रेण "त्य्" इत्यस्य 'च्' कारे, "किचा" इति स्थिते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यने सूत्रेण 'च्' इत्यस्य दिवत्वे "किच्चा" इति रूपं सिद्धम्।

### शृगालः > सिआलो

'शृगालः'' इति स्थिते ''इदृष्यादिषु'' (प्रा. १.२८) इत्यनेन सूत्रेण ''आदि-ऋ'' कारस्य ''इ'' कारे ''शिगाल'' इति जाते ''शषोः सः'' (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे ''सिगाल'' इति जाते ''कगचजतदपयवां प्रायो लोपः'' (प्रा. २.२) इत्यनेन सूत्रेण 'ग्' कारस्य लोपे ''सिआल'' इति प्राप्ते ''अत ओत् सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने ''सु'' इत्यस्य ''ओत्वे'' ''सिआलो'' इति रूपं सिद्धम्।

### कृतिः > किई

''कृतिः'' इति स्थिते ''इदृष्यादिषु'' (प्रा. १.२८) इत्यनेन सूत्रेण ''आदि-ऋ'' कारस्य ''इ'' कारे ''किति'' इति स्थिते, ''कगचजतदपयवां प्रायो लोपः'' (प्रा. २.२) इत्यनेन सूत्रेण 'त्' कारस्य लोपे किइ'' इति प्राप्ते, ''सुभिस्सुप्सु दीर्घः'' (प्रा. ५.१८) इत्यनेन सूत्रेण इदन्तस्य ''सु'' इति विभक्ति प्रत्यये दीर्घादेशे ''किई'' इति रूपं सिद्धम्।

### कृषिः > किसी

''कृषिः'' इति स्थिते ''इदृष्यादिषु'' (प्रा. १.२८) इत्यनेन सूत्रेण ''आदि-ऋ'' कारस्य ''इ'' कारे ''किषि'' इति स्थिते, ''शषोः सः'' (प्रा. २.४३) इत्यनेन सूत्रेण 'ष्' कारस्य 'स्' कारे ''किसि'' इति प्राप्ते ''सुभिस्सुप्सु दीर्घः'' (प्रा. ५.१८) इत्यनेन सूत्रेण इदन्तस्य 'सु' इति विभक्ति प्रत्यये दीर्घादेशे ''किसी'' इति रूपं सिद्धम्।

### कृपा > किवा

''कृपा'' इति स्थिते ''इदृष्यादिषु'' (प्रा. १.२८) इत्यनेन सूत्रेण आदि-ऋ'' काश्स्य ''इ'' कारे ''किपा'' इति स्थिते, ''पोवः'' (प्रा. २.१५) इत्यनेन सूत्रेण 'प्' कारस्य 'व्' कारे ''किवा'' इति रूपं सिद्धम्।

### समन्वयः

''वितृष्णः'' शब्दे मध्यग 'ऋ' कारस्य 'इ' कारे इयं अनुमीयते यत् मध्य (अनादि) ''ऋ'' कारस्याऽपि 'इ' कारः भवति।

२९. उदृत्वादिषु

सुबोधिनी

ऋत उत्त्वं स्यात्।

ऋतुप्रवृत्तिवृत्तान्तमृणालपृथिवीमृताः।

प्रावृट्परभृतभ्रातृजामातर्त्वादयः स्मृताः॥

उदू। पउत्ती। वुत्तंतो। मुणालं। पुहवी। मुओ। पाउसो। परहुओ। भाउओ। जामाउओ॥

सञ्जीवनी

ऋतुशब्दसदृशा ऋत्वादयः। तेषु ऋत्वादिषु शब्देषु ऋकारस्य उकारादेशः स्यात्। ऊदू, ऋतुः। ऋत्वादिषु तो द इति दः। सुभिस्सुप्सु दीर्घ इति दीर्घः। पउत्ती, प्रवृत्तिः। सर्वत्र लवरामिति रेफलोपः। पूर्ववदन्यत्। वुत्तन्तो, वृत्तान्तः। अदातो यथादिषु वेत्यत्त्वम्। मुणालं, मृणालम्। पुहवी, पृथिवी। अत् पथिहरिद्रापृथिवीष्वितीकारस्य अत्त्वम्। खघथादिना थस्य हः। मुओ, मृतः। पाउसो, प्रावृट्। दिक्प्रावृषोः स इति सः। नसन्तप्रावृट्शरदः पुंसीति पुंस्त्वम्। अत ओत् सोरित्योत्त्वम्। परहुओ, परभृतः। भाउओ, जामउओ। भ्रातृजामातृशब्दयोः। स्वार्थे को वेति कप्रत्ययः॥३१॥

ऋतुप्रवृत्तिवृत्तान्तमृणालपृथिवीमृताः।

प्रावृट् परभृतो भ्राता जामातर्त्वादयः स्मृताः॥

प्राकृतमञ्जरी

ऋत्वादिषु पदेषु स्यादृकाराणामुकारता।

भवेदृतुरुदु वृन्तं वुंटं प्रावृट् च पावुसो॥

ऋतुर्वृन्दावनं वृन्तं वृत्तान्तो विवृतं धृतम्।

मृणाल-पृथिवी-प्रावृट्-तालवृन्त-प्रवृत्तयः॥

वृत्तिः परिवृतश्चेति स्यादृत्वादिरयं गणः।

अत्र स्युः किल केषाञ्चिद् भ्रातृ-जामातृ-मातरः॥२९॥

**मनोरमा**

ऋतु इत्येवमादिषु आदेः ऋतः उकारो भवति। उदू। मुणालो। पुहवी। वुन्दावणं। पाउसो। पउत्ती। णिउदं। संवुदं। णिव्वुदं। वुत्तन्तो। परहुओ। माउओ। जामाउओ॥ ऋतु-मृणाल-पृथिवी-वृन्द्रावन-प्रावृष्-प्रवृत्ति-निवृत-संवृत-निर्वृत-वृत्तान्त-परभृत-मातृक-जामातृक इत्येवमादयः॥

**अम्बिका**

"आदेरतः" (प्रा. १.१) इत्यतः "आदेः" तथा "ऋतोऽत्" (प्रा. १.२७) इति सूत्रतः "ऋतः" पदद्वयमनुवर्त्तते, इति "भामह आचार्यस्य" विचारम्। परन्तु उदाहरणात् प्रतीयते यत्, अनेकात्र मध्य "ऋ" कारस्य स्थाने "उ" कारः आदिश्यते। अतः "आदेः" इति पदस्यानुवर्त्तनं तु चिन्त्यमेव।

**सूत्रार्थः**

ऋतुः आदि (मृणाल, पृथिवी, वृन्दावन, प्रावृट्, प्रवृत्ति, निवृत्त, संवृत्त, निर्वृत, वृत्तान्त, परभृत, मातृक, तथा जामातृक) संस्कृत शब्देषु विद्यमान "ऋ" (ऋत्) कारस्यस्थाने प्राकृते "उ" (उत्) कारः भवति।

**ऋतुः > उदू**

"ऋतुः" इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य "उ" कारे "उतुः" इति स्थिते "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यनेन सूत्रेण 'त्' कारस्य 'द्' कारे "उदु" इति प्राप्ते "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण उदन्तस्य 'सु' इति विभक्ति प्रत्यये दीर्घत्वे "उदू" इति रूपं सिद्धम्।

**मृणालः > मुणालो**

"मृणालः" इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य "उ" कारे "मुणाल" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे" "मुणालो" इति रूपं सिद्धम्।

### पृथिवी > पुहवी

अस्याः प्रक्रियाः "अत् पथिहरिद्रापृथिवीषु" (प्रा. १.१३) सूत्रप्रसङ्गे द्रष्टव्यम्।

### वृन्दावनम् > वुन्दावणं

"वृन्दावनम्" इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य "उ" कारे "वुन्दावनम्" इति जाते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण "न्" कारस्य 'ण्' कारे "वुन्दावण" इति प्राप्ते सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "वुन्दावणं" इति शब्दःसिद्धः।

### प्रावृट् > पाउसो

"प्रावृट्" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे "पावृट्" इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इत्यनेन सूत्रेण "ऋ" कारस्य "उ" कारे "पावुट् इति जाते "सर्वत्र लवराम्" इत्यनेन सूत्रेण "व्" कारस्य लोपे "पाउट्" इति प्राप्ते "दिक्-प्रावृषोः सः" (प्रा. ४.११) इत्यनेन सूत्रेण अन्त्यहल् स्थाने स' आदेशे "पाउस" इति प्राप्ते "नसान्तप्रावृट्शरदःपुंसि" (प्रा. ४.१८) इत्यनेन सूत्रेण 'प्रावृट्' शब्द पुंल्लिंगत्वात् "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे", "पाउसो" रूपं सिद्धम्।

### प्रवृत्तिः > पउत्ती

"प्रवृत्ति" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे "पवृत्ति" इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इत्यनेन सूत्रेण "ऋ" कारस्य "उ" कारे पवुत्ति" इति जाते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'व्' कारस्य लोपे "पउत्ति" इति प्राप्ते, "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण इदन्तस्य 'सु' इति विभक्तिप्रत्यये दीर्घत्वे "पउत्ती" इति रूपं सिद्धम्।

### निवृत्तम् > णिउदं

निवृत्तम् इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे "णिवृत्त" इति स्थिते "उदृत्वादिषु" (प्रा. १.

२९) इत्यनेन सूत्रेण "ऋ" कारस्य "उ" कारे "णिवुत्त" इति जाते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण "व्' कारस्य लोपे "णिउत्त" इति स्थिते "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यनेन सूत्रेण "त्" कारस्य 'द' कारे "णिउद" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५. ३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "णिउदं" इति रूपं सिद्धम्।

## संवृतम् > संवुदं

"संवृतम्" इति स्थिते "उदृत्वादिषु" (१.२९) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य स्थाने "उ" कारे "संवुतम्" इति जाते, "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यनेन सूत्रेण "त्" कारस्य 'द्' कारे, "संवुदम्" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे "संवुदं" इति रूपं सिद्धम्।

## निर्वृतम् > णिव्वुदं

निर्वृतम्" इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण "न्" कारस्य "ण्" कारे "णिर्वृतम्" इति स्थिते, "उदृत्वादिषु" (प्रा. १.२९) इति सूत्रेण "ऋ" 'कारस्य "उ" कारे "णिर्वुतम्" इति जाते, "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण "र्" कारस्य लोपे, "णिवुतम्" इति स्थिते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'व्' कारस्य द्वित्वे "णिव्वुतम्" इति स्थिते "ऋत्वादिषु तो दः" (प्रा. २. ७) इत्यनेन सूत्रेण "त्" कारस्य "द्" कारे "णिव्वुद" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "णिव्वुदं" इति रूपं सिद्धम्।

## वृत्तान्तः > वुत्तन्तो

"वृत्तान्तः" इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इत्यनेन सूत्रेण "आदि-ऋ" कारस्य "उ" कारे "वुत्तान्त" इति स्थिते. "अदातो यथादिषु वा" (प्रा. १.१०) इत्यनेन सूत्रेण 'आ' कारस्य 'अ' कारे "वुत्तन्त" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य ओत्वे" "वुत्तन्तो" इति रूपं सिद्धम्।

### परभृतः > परहुओ

परभृतः" इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इत्यनेन सूत्रेण ऋ" कारस्य 'उ' कारे परभुत" इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण "भ्" कारस्य "ह्" कारे "परहुत" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा.२.२) इत्यनेन सूत्रेण "त्" कारस्य लोपे "परहुअ" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभिक्ति एकवचने "सु" इत्यस्य ओत्वे "परहुओ" इति रूपं सिद्धम्।

### मातृकः > माउओ

"मातृकः" इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इत्यनेन सूत्रेण "ऋ" कारस्य 'उ' कारे "मातुक" इतिस्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण क्त् कारयोः लोपे "माउअ" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने "सु" इत्यस्य ओत्वे "माअओ" इति रूपं सिद्धम्।

### जामातृकः > जामाउओ

"जामातृकः" इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इत्यनेन सूत्रेण "ऋ" कारस्य "उ" कारे "जामातुक" इति स्थिते, "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "त्क्" कारयोः लोपे "जामाउअ" इति प्राप्ते "अत-ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य ओत्वे "जामाउओ" इति रूपं सिद्धम्।

## ३०. अयुक्तस्य रिः

### सुबोधिनी

अयुक्तस्य रिः॥

वर्णान्तरेणासंयुक्तस्य ऋतो रिकारः स्यात्। रिणं, ऋणम्।

### प्राकृतमञ्जरी

**अयुक्तस्य हला रित्वमृकारस्य विधीयते।**

**ऋक्षमाहुर्बुधा रिच्छं ऋद्धं रिद्धं ऋणं रिणं॥**

**मनोरमा**

वर्णान्तरेणायुक्तस्यादेः "ऋ" कारस्य रिकारो भवति, रिणं। रिद्धो। रिच्छो।

ऋण-ऋद्ध-ऋच्छ-इत्येवमादयः॥

**अम्बिका**

"आदेरतः" (प्रा. २.२) इति सूत्रतः 'आदेः', "ऋतोऽत्" (प्रा. १.२७) इत्यतः ऋतः पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

संस्कृतशब्देषु आदिषु विद्यमान तथा असंयुक्त "ऋ" (ऋत्) कारस्य स्थाने प्राकृते "रि" कारः भवति।

**ऋणम् > रिणं**

"ऋणम्" इति स्थिते "अयुक्तस्य रिः" (प्रा. १.३०) इत्यनेन सूत्रेण आदि तथा अयुक्त "ऋ" कारस्य "रि" कारे "रिण" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण"सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "रिणं" इति रूपं सिद्धम्।

**ऋक्षः > रिच्छो**

"ऋक्षः" इति स्थिते "अयुक्तस्य रिः" (प्रा. १.३०) इत्यनेन सूत्रेण आदि तथा अयुक्त "ऋ" कारस्य "रि" कारे "रिक्ष" इति स्थिते "अक्ष्यादिषु च्छः" (छः) (प्रा. ३.३०) इत्यनेन सूत्रेण "क्ष्" इत्यस्य "छ्" कारे "रिछ" इति जाते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "छ्" इत्यस्य द्वित्वे, "वर्गेषु युजः पूर्वः" (प्रा. ३. ५१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "रिच्छो" इति रूपं सिद्धम्।

**ऋद्धः > रिद्धो**

"ऋद्धः" इति स्थिते "अयुक्तस्य रिः" (१.३०) इत्यनेन सूत्रेण आदि तथा अयुक्त "ऋ" कारस्य "रि" कारे "रिद्ध" इति स्थिते, "उपरि लोपः कगडतदपषसाम्" (प्रा. ३.१) इत्यनेन सूत्रेण 'द' कारस्य लोपे, "रिध" इति स्थिते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन

सूत्रेण "ध्" कारस्य द्वित्वे "रिध्ध" इति स्थिते "वर्गेषु युजः पूर्वः (प्रा. ३.५१) इत्यनेन सूत्रेण, ध् कारस्य "द्" कारे "रिद्ध" इति प्राप्ते, "अत ओत् सोः' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "रिद्धो" इति रूपं सिद्धम्।

## ३१. क्वचिद्युक्तस्यापि

### सुबोधिनी

युक्तस्याऽपि मध्ये॥ ॥

सुसंस्कृताद्यवर्णमध्यस्थितस्य ऋतो युक्तत्यापि रिकारादेशः स्यात्। यारिसो, यादृशः। तारिसो तादृशः॥

### सञ्जीवनी

युक्तस्यापि वर्णान्तरेण संयुक्तस्य ऋकारस्य रिरित्ययमादेशो भवति। अपिः समुच्चये। जारिसो, यादृशः। आदेर्यो ज इति जः। तारिसो, तादृशः। एरिसो, केरिसो। ईदृशकीदृशयोः। एन्नीडापीडकीदृशेदृशेष्विति ईकारस्य एत्त्वम्। सर्वत्र शषोः स इति शस्य सः।

### प्राकृतमञ्जरी

**युक्तस्यापि क्वचिद्रत्वं स्यादृकारस्य तद् यथा।**
**कीदृशं केरिसं विद्यादीदृशं पुनरेरिसं॥**
**सदृशो यादृशस्तद्वदेतादृश इतीदृशौ।**
**मादृशास्मादृशी चैवं युष्मादृशभवादृशौ॥**
**त्वादृशोऽन्यादृशस्तद्वत् कीदृशेदृशतादृशाः।**
**प्रायशः क्वचिदित्युक्तं तथा लक्ष्येषु दृश्यताम्॥**

### मनोरमा

वर्णान्तरेण युक्तस्यापि क्वचिदृकारस्य रिकारो भवति। एरिसो। सरिसो। तारिसो। केरिसो॥

### अम्बिका

"ऋतोऽत्" (प्रा. १.२७) इति सूत्रतः "ऋतः" तथा "अयुक्तस्य

रिः'' (प्रा. १.३०) इति सूत्रतः ''रिः'' पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

कतिपय संस्कृत शब्देषु वर्णान्तरसंयुक्त मध्य ''ऋ'' कारस्य प्राकृते ''रि'' कारः भवति।

**यथा–**

**ईदृशः > एरिसो**

अस्य प्रक्रियां ''एन्नीड़ापीड़कीदृशीदृशेषु'' (प्रा. १.१९) इति सूत्रं प्रसंगे द्रष्टव्यम्।

**सदृशः > सरिसो**

सदृशः'' इति स्थिते ''क्वचिद्युक्तस्यापि'' (प्रा. १.३१) इत्यनेन सूत्रेण ''ऋ'' कारस्य ''रि'' कारे, ''सरिश'' इति स्थिते, शषोः सः'' (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे ''सरिस'' इति जाते ''अत ओत् सोः'' (प्रा. ५.१) इति सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने ''सु'' इत्यस्य ''ओत्वे'', ''सरिसो'' इति रूपं सिद्धम्।

**तादृशः > तारिसो**

''तादृशः'' इति स्थिते ''कगचजतदपयवां प्रायो लोपः'' (प्रा. २. २) इत्यनेन सूत्रेण ''द्'' कारस्य लोपे ''ताऋश'' इति स्थिते ''क्वचिद्युक्तस्यापि'' (प्रा. १.३१) इत्यनेन सूत्रेण ''ऋ'' कारस्य ''रि'' कारे, ''तारिश'' इति स्थिते, ''शषोः सः'' (प्रा. २.४३) इत्यनेन सूत्रेण ''श्'' कारस्य ''स्'' कारे ''तारिस'' इति स्थिते, ''अत ओत् सोः'' (प्रा. ५.१) सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने ''सु'' इत्यस्य ''ओत्वे'', ''तारिसो'' इति रूपं सिद्धम्।

**कीदृशः > केरिसो**

अस्य प्रक्रियां ''एन्नीड़ापीड़कीदृशीदृशेषु'' (प्रा. १.१९) इति सूत्रप्रसङ्गे द्रष्टव्यम्।

३२. वृक्षेवेनरूर्वा

सुबोधिनी

अत्र वेन वकारेण सह ऋतो रुत्वं वा स्यात्। रुक्खो, वृक्षः।

अत्त्वमित्त्वं तथा चोत्त्वं रित्त्वं रुत्वमृतोऽत्र यत्।

एषां लक्ष्यवशात् कार्यो निश्चयो न तु सूत्रतः॥

ऋत इति निवृत्तम्॥

सञ्जीवनी

वृक्षशब्दे वेन वकारेण सह ऋकारस्य रुः स्याद्वा। रुक्खो वृक्षः। ष्कस्कक्षां खः इति क्षस्य खः। तस्य द्वित्वे वर्गे युजः पूर्व इति कः। पक्षे वच्छो, वृक्षः। क्ष्मावृक्षक्षणेषु छः, द्वित्वं च पूर्ववत्।

आत्त्वमित्त्वं तथा चोत्त्वं रित्त्वं रुत्वमृतोऽत्र यत्।

एषां लक्ष्यवशात् कार्यो निश्चयो न तु सूत्रतः॥

प्राकृतमञ्जरी

वृक्षशब्दे वकारेण सह रुत्वमृतः स्मृतम्।

विकल्पेन विदुर्वृक्षं रुक्खं वा वच्छमेव वा॥३२॥

मनोरमा

वृक्ष शब्दे व शब्देन सह ऋ कारस्य "रू" कारो भवति वा। रुक्खो, वच्छो। व्यवस्थित विभाषाज्ञापनाच्छत्वपक्षे न भवति, खत्वपक्षे तु नित्यमवभवति॥

अम्बिका

"ऋतोऽत्" (प्रा. १.२७) इत्यतः "ऋतः" पदमनुवर्त्तते।

सूत्रार्थः

संस्कृत "वृक्ष" शब्दे विद्यमान "ऋ" (ऋत्) कारस्य, "वृक्ष" शब्दस्य 'व' भागेन सह प्राकृते विकल्पेन "रु" कारः भवति।

**वृक्षः > रुक्खो**

"वृक्षः" इति स्थिते "वृक्षे वेन रुर्वा" (प्रा. १.३२) इत्यनेन सूत्रेण, 'व्' कारेण सह ऋ कारस्य 'रु' कारे "रुक्ष" इति स्थिते, "ष्कस्कक्षां खः" (प्रा. ३.२९) इत्यनेन सूत्रेण "क्ष्" कारस्य 'ख्" कारे "रुख" इति स्थिते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "ख्" कारस्य द्वित्वे "रुख्ख" इति स्थिते "वर्गेषु युजः पूर्व" (प्रा. ३.५१) इत्यनेन सूत्रेण "ख्" कारस्य "क्" कारे "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "रुक्खो" इति शब्दः सिद्धः।

**वृक्षः > वच्छो**

"वृक्षः" इति स्थिते "ऋतोऽत्" (प्रा. १.१७) इत्यनेन सूत्रेण "ऋ" कारस्य "अ" कारे "वक्ष" इति स्थिते "क्षमावृक्षक्षणेषु वा" (प्रा. ३.३२) इत्यनेन सूत्रेण क्ष्" कारस्य विकल्पेन "छ्" कारे, "वछ" इति स्थिते, "शेषादेशयोदित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'छ्' कारस्य द्वित्वे "वछ्छ" इति जाते, "वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इत्यनेन सूत्रेण छ्' कारस्य च् कारे वच्छ इति स्थिते, "अत ओत् सोः" (प्रा. ५.२) इत्यनेन सूत्रेण, अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "वच्छो" इति रूपं सिद्धम्।

**समन्वयः**

इदं सूत्रस्य विभाषा खलु, व्यवस्थित विभाषा। अतः "क्ष्" कारस्य 'ख्' कारे अयं नियमः नित्यमेव। परन्तु' "क्ष्" कारस्य "छ्" कारे अयं नियमः न प्रयुज्यते।

## ३३. लृतः क्लृप्त इलि

### सुबोधिनी

लृकारस्य इलिरादेशः स्यात्। किलित्तं, क्लृप्तम्। वेत्यनुवर्त्तते। स च व्यवस्थित-विकल्पार्थः। तेनेह न भवति। लिआरो, लृकारः॥३४॥

### सञ्जीवनी

लृतो लृकारस्य इलिरादेशः स्यात्। किलित्तं, क्लृप्तम्। वेति वर्तते।

सा च व्यवस्थितविभाषा। तेनेह न भवति। लिआलो, लृकारः। लृकारऋकारयोः सावर्ण्याद् अयुक्तस्यापि लृकारस्य रिः। तस्य हरिद्रादीनां रो ल इति लत्वम्॥

**प्राकृतमञ्जरी**

**केवलस्याप्रयुक्तत्वाद् लृतः क्लृप्ते स्थितस्य तु।**
**इत्यादेशो भवेत् क्लृप्तं किलित्तं कथ्यते बुधैः॥३३॥**

**मनोरमा**

क्लृप्तशब्दे लृकारस्य इलीत्ययमादेशो भवति। किलित्तं। तदेवमादेशान्तरविधानात् प्राकृते ऋकारलृकारौ न भवतः॥

**अम्बिका**

नानुवृत्तिः वर्त्तते अस्मिन् सूत्रे।

**सूत्रार्थः**

संस्कृत क्लृप्त शब्दस्य "लृ" कारस्य स्थाने प्राकृते "इलि" भवति।

**यथा–**

क्लृप्तम् > किलित्तं

"क्लृप्तम्" इति स्थिते "लृतः क्लृप्त इलि" (प्रा. १.३३) इत्यनेन सूत्रेण "लृ" इत्यस्य "इलि" इति प्राप्ते "किलिप्तम्" इति स्थिते, "उपरि लोपः कगडतदपषसाम्" (प्रा. ३.१) इत्यनेन सूत्रेण 'प्' कारस्य लोपे, "किलितम्" इति स्थिते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "त्" कारस्य द्वित्वे "किलित्तम्" इति स्थिते "सौर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यने सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "किलित्तं" इति रूपं सिद्धम्।

**३४. एत इद् वेदनादेवरयोः**

**सुबोधिनी**

एतयोरेकारस्य इत्त्वं स्यात्। विअणा, वेअणा। दिअरो, देअरो॥

सञ्जीवनी

एतयोः शब्दयोः एत एकारस्य इकारादेशो भवति वा। तकारोऽसन्देहार्थः। विअणा, वेअणा, वेदना। कगचादिना दलोपः। नो ण इति णः। दिअरो, देअरो, देवरः। अत ओत् सोरित्योत्त्वम्। पूर्ववदन्यत्। 'एकारस्य भवेदित्त्वं केसरेऽपि विभाषया'। किसरो, केसरो, केशरः॥ ३५॥

प्राकृतमञ्जरी

**एत इद् वेदनाशब्दे देवरे च विधीयते।**
**वेदना विअणा तद्वद् देवरो दिअरो मतः॥**
**वेअणा देअरो चेति लक्ष्ये भवति चेदिह।**
**वेन रुर्वेत्यतो वेति स्यान्मण्डूकप्लुतिक्रमात्॥**

मनोरमा

वेदनादेवरयोरेकारस्य इकारो भवति। विअणा, दिअरो। वाग्रहणनुवृत्तेः क्वचिद् वेअणा, देअरो इत्यपि॥

अम्बिका

भामह आचार्यस्य मतेन संभवतः "वृक्षे वेन रुर्वा" (प्रा. १.३२) इति सूत्रतः "वा" पदमनुवर्त्तते, मण्डूकप्लुति न्यायेन।

सूत्रार्थः

"वेदना", "देवर" इति संस्कृत शब्दयोः "ए" - कारस्य स्थाने प्राकृते विकल्पेन "इ" कारः भवति।

यथा—

वेदना > विअणा, वेअणा

"वेदना" इति स्थिते "एत इद् वेदनादेवरयोः" (प्रा. १.३४) इत्यनेन सू. "ए" कारस्य "इ" कारे "विदना" इति स्थिते, "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'द्' इत्यस्य लोपे, "विअना" इति जाते, "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे "विअणा" इति रूपं सिद्धम्। "इ" कारस्य अभाव पक्षे

"वेअणा" इति रूपं सिद्धम्।

**देवरः > दिअरो, देअरो**

"देवरः" इति स्थिते "एत इद् वेदनादेवरयोः" (प्रा. १.३४) इत्यनेन सूत्रेण "ए" कारस्य "इ" कारे "दिवर" इति स्थिते, "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "व्" कारस्य लोपे "दिअर" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने "सु" इत्यस्य ओत्वे "दिअरो" इति रूपं सिद्धम्। "इ" कारस्य अभाव पक्षे "देअरो" इति रूपं सिद्धम्।

## ३५. ऐत एत्

### सुबोधिनी

ऐत ऐकारस्य स्थाने एत्त्वं भवति। सेलो, शैलः॥

### सञ्जीवनी

ऐत ऐकारस्य स्थाने एत्त्वं भवति। सेलो, शैलः। शषोः स इति शस्य सः। केलासो, कैलाशः। वेसअणो, वैश्रवणः। सर्वत्र लवरामिति रलोपः। सेण्णं, सैन्यम्। अधो मनयामिति यलोपः। नो ण इति णः। शेषादेशादिना द्वित्वम्। वेरं, वैरम्। तेल्लं, तैलम्। नीडादिषु इति लस्य द्वित्वम्॥ ३६॥

### प्राकृतमञ्जरी

**ऐकारस्य भवेदेत्त्वमुत्सर्गेण पदे पदे।**

**शैलो निगद्यते सेलो शैवलं सेअलं मतम्॥ ३५॥**

### मनोरमा

आदेरैकारस्य एकारो भवति। सेलो, सेच्चं, एरावणो, केलासो। तेल्लोक्कं॥

शैल-शैत्य-ऐरावण-कैलास-त्रैलोक्यानि॥

### अम्बिका

आदेरतः (प्रा. १.१) इत्यतः "आदेः" पदमनुवर्त्तते।

**सूत्रार्थः**

संस्कृत शब्देषु "आदि-ऐ" (ऐत्) कारस्य स्थाने प्राकृते "ए" - कारः भवति।

**यथा–**

**शैलः > सेलो**

"शैलः" इति स्थिते "ऐत एत्" (१.३५) इति सूत्रेण आदि "ऐ" कारस्य "ए" कारे "शेल" इति जाते, "शषोः सः" (प्रा 2.43) इत्यनेन सूत्रेण "श्" कारस्य "स्" कारे "सेल" इति प्राप्ते "अत ओत् सोः" (प्रा ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने "सु" इत्यस्य ओत्वे "सेलो" इति रूपं सिद्धम्।

**शैत्यम् > सेच्चं**

"शैत्यम्" इति स्थिते "ऐत एत्" (प्रा. १.३५) इत्यनेन सूत्रेण आदि "ऐ" कारस्य "ऐ" कारे "शेत्यम्" इति स्थिते, "शषोः सः" (प्रा. २.४२) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे, "सेत्यम्" इति स्थिते, "त्यथ्यद्यां चछजाः" (प्रा. ३.२७) इत्यनेन सूत्रेण "त्य्" इत्यस्य 'च्' कारे "सेचम्" इति स्थिते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "च्" इत्यस्य द्वित्वे "सेच्च" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे "सेच्चं" इति रूपं सिद्धम्।

**ऐरावणः > एरावणो**

"ऐरावणः" इति स्थिते "ऐत एत्" (प्रा. १.३५) इत्यनेन सूत्रेण "आदि-ऐ" कारस्य "ए" कारे "एरावण" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण, अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे" "एरावणो" इति रूपं सिद्धम्।

**कैलासः > केलासो**

"कैलासः" इति स्थिते "ऐत एत्" (प्रा. १.३५) इत्यनेन सूत्रेण "आदि-ऐ" कारस्य 'ए' कारे "केलासः" इति स्थिते, "अत ओत्

सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने ''सु'' इत्यस्य ''ओत्वे'' ''केलासो'' इति रूपम् सिद्धम्।

### त्रैलोक्यम् > तेल्लोक्कं

''त्रैलोक्यम्'' इति स्थिते ''ऐत एत्'' (प्रा. १.३५) इत्यनेन सूत्रेण ''आदि-ऐ'' कारस्य ''ए'' कारे ''तेलोक्यम्'' इति जाते, ''सर्वत्र लवराम्'' (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे ''तेलोक्यम्'' इति जाते ''अधोमनयाम्'' (प्रा. ३.२) इत्यनेन सूत्रेण 'य्' कारस्यलोपे, ''तेलोकम्'' इति जाते, ''शेषादेशयोर्द्वित्वमनादौ'' (प्रा. ३.५०) इत्यनेन सूत्रेण ''क्'' कारस्य द्वित्वे ''तेलोक्कम्'' इति प्राप्ते ''नीड़ादिषु (च)'' (प्रा. ३. ५२) इत्यनेन सूत्रेण 'ल्' इत्यस्य द्वित्वे ''तेल्लोक्कम्'' इति जाते, ''सोर्बिन्दुनपुंसके'' (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके ''सु'' इत्यस्य बिन्दुत्वे (अनुस्वारे) ''तेल्लोक्कं'' इति रूपं सिद्धम्।

## ३६. दैत्यादिष्वइ (त्)

### सुबोधिनी

**एषु एकारस्य अइ इत्यादिश्यते।**
**दैत्यकैतववैशाखस्वैरकैरवभैरवाः।**
**वैशंपायनवैदेह्यौ दैत्याद्या एवमादयः॥**

दइच्चो कइअवं वइसाहो सइरं कइरवं वइसंपाअणो वइदेही। सिंहावलोकितन्यायादुत्तरसूत्राद्वेति वर्त्तते। तेन 'ऐतो लक्ष्यवशात् स्यातां अइदेतौ क्वचित्तु वा'। सइरं सेरं स्वैरम्। चइत्तो चेत्तो चैत्रः। वइज्जो वेज्जो वैद्यः। भइरवो भेरवो भैरवः। इह तु न भवति। दइच्चो। दैत्यः॥ ३७॥

### सञ्जीवनी

ऐत इत्यनुवर्तते औत ओदित्यतः प्राक्। दैत्यादिषु शब्देषु ऐकारस्य अइत् स्यात्। पूर्वेण एत्त्वं प्राप्तम्। दइच्चो, दैत्यः। त्यथ्यद्यां चछजा इति त्यस्य चत्वम्। तस्य शेषादेशेत्यादिना द्वित्वम्। कइअवं, कैतवम्। कगचादिना तलोपः। वलोपो न भवति, प्रायोग्रहणात्। वइसाहो, वैशाखः। शषोः स इति शस्य सः। खघथादिना खस्य हः। सइरं, स्वैरम्। पूर्वोक्तपरोक्तयोः परोक्तो विधिर्बलवानिति उपरि लोप इत्यादिनां प्राप्तं सलोपं बाधित्वा

सर्वत्र लवरामिति वलोपः। कइरवं, कैरवम्; भइरवं, भैरवम्। वइसंपाअणो, वैशम्पायनः। पो व इति वत्वं न भवति, तत्र प्रायोग्रहणानुवृत्तेः। वइदेही, वैदेही।

**दैत्यकैतववैशाखस्वैरकैरवभैरवाः।**

**वैशम्पायनवैदेह्यौ दैत्याद्या एवमादयः॥**

सिंहावलोकनन्यायेन उत्तरत्र वेति वर्तते। तेन 'ऐतो लक्ष्यवशात् स्यातामइदेतौ क्वचित्तु वा'। सइरं, सैरं, स्वैरम्। चइत्तो, चेत्तो, चैत्रः। वइज्जो, वेज्जो, वैद्यः। त्यथ्यद्यां चछजा इति त्यस्य चत्वम्। भइरवो भेरवो भैरवः। इह न भवति दइच्चो दैत्यः॥

**प्राकृतमञ्जरी**

**दैत्यादिषु पदेषु स्यादइरित्यक्षरद्वयम्।**

**दैत्यस्तेन दइच्चो स्यात् स्वैरं च सइरं मतम्॥**

**दैत्यः स्वैरं चैत्यं कैटभवैदेहकौ च वैशाखः।**

**वैशिक-भैरव-वैशम्पायन-वैदेशिकाश्च दैत्यादिः॥**

## मनोरमा

दैत्यादिषु शब्देषु ऐकारस्य अइ इत्ययमादेशो भवति। दइच्चो, चइत्तो, भइरवो, सइरं, वइरं, वइदेसो, वइदेहो, कइअवो, वइसाहो, वइसिओ, वइसंपाइण॥ दैत्य - चैत्र - भैरव - स्वैर - वैर - वैदेश - वैदेह - कैतव - वैशाख - वैशिक - वैशम्पायन - इत्यादयः॥

## अम्बिका

सूत्रमिदं, "ऐत एत्" (प्रा १.३५) इति सूत्रस्य अपवाद स्वरूपम्, "ऐत एत्" इति सूत्रतः "ऐतः" तथा "आदेरतः" (प्रा. १.१) इत्यतः "आदेः" इति पदद्वयमनुवर्त्तते।

## सूत्रार्थः

दैत्य आदि (चैत्र, भैरव, स्वैर, वैर, वैदेश, वैदेह, कैतव, वैशाख, वैशिक, वैशम्पायन इत्यादयः) संस्कृत शब्देषु आदि "ऐ" (ऐत्) कारस्य स्थाने प्राकृते "अइ" (अइत्) इति भवति।

यथा—

दैत्यः > दइच्चो

"दैत्यः" इति स्थिते "दैत्यादिष्वइ (त्)" (प्रा. १.३६) इत्यनेन सूत्रेण "ऐ" कारस्य "अइ" इति आदेशे "दइत्यः" इति स्थिते "त्यथ्यद्यां चछजाः" (प्रा. ३.२७) इत्यनेन सूत्रेण "त्य" इत्यस्य "च्" कारे, "दइच" इति स्थिते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "च्" कारस्य द्वित्वे "दइच्च" इति प्राप्ते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "दइच्चो" इति रूपं सिद्धम्।

चैत्रः > चइत्तो

"चैत्रः" इति स्थिते "दैत्यादिष्वइ" (प्रा. १.३६) इत्यनेन सूत्रेण 'ऐ' कारस्य 'अइ" इति आदेशे "चइत्र" इति स्थिते, "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे चइत" इति स्थिते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'त्' कारस्य द्वित्वे "चइत्त" इति जाते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "चइत्तो" इति रूपं सिद्धम्।

भैरवः > भइरवो

"भैरवः" इति स्थिते "दैत्यादिष्वइ (त्)" (प्रा. १.३६) इत्यनेन सूत्रेण "ऐ" कारस्य "अइ" इति आदेशे "भइरव" इति प्राप्ते, "अत् ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य ओत्वे, "भइरवो" इति रूपं सिद्धम्।

स्वैरम् > सइरं

"स्वैरम्" इति स्थिते "दैत्यादिष्वइ (त्)" (प्रा. १.३६) इत्यनेन सूत्रेण "ऐ" कारस्य "अइ" इति आदेशे "सइरम्" इति प्राप्ते, "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "सइरं" इति रूपं सिद्धम्।

### वैरम् > वइरं

"वैरम्" इति स्थिते "दैत्यादिष्वइ" (त्)" (प्रा. १.३६) इत्यनेन सूत्रेण "ऐ" कारस्य "अइ" इति आदेशे "वइरम्" इति प्राप्ते, "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "वइरं" इति रूपं सिद्धम्।

### वैदेशः > वइदेसो

"वैदेश" इति स्थिते "दैत्यादिष्वइ (त्)" (प्रा. १.३६) इत्यनेन सूत्रेण आदि "ऐ" कारस्य "अइ" आदेशे "वइदेश" इति स्थिते, "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण "श्" कारस्य "स्" कारे "वइदेस" इति स्थिते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "वइदेसो" इति रूपं सिद्धम्।

### वैदेहः > वइदेहो

"वैदेहः" इति स्थिते "दैत्यादिष्वइ (त्)" (प्रा. १.३६) इत्यनेन सूत्रेण "आदि-ऐ" कारस्य "अइ" इति आदेशे "वइदेह" इति प्राप्ते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "वइदेहो" इति रूपं सिद्धम्।

### कैतवम् > कइअवं

"कैतवम्" इति स्थिते "दैत्यादिष्वइ (त्)" (प्रा. १.३६) इत्यनेन सूत्रेण "आदि-ऐ" कारस्य "अइ" इति आदेशे "कइतवम्" इति जाते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'त्' कारस्य लोपे "कइअवम्" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "कइअवं" इति रूपं सिद्धम्।

### वैशाखः > वइसाहो

"वैशाखः" इति स्थिते "दैत्यादिष्वइ (त्)" (प्रा. १.३६) इत्यनेन सूत्रेण "आदि-ऐ" कारस्य "अइ" इति आदेशे "वइशाख" इति जाते, "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण "श्" कारस्य "स्" कारे,

"वइसाख" इति जाते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण "ख्" इत्यस्य "ह्" कारे "वइसाह" इति प्राप्ते "अत ओत् सोः" इत्यनेन सूत्रेण (प्रा. ५.१) अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे" "वइसाहो" इति रूपं सिद्धम्।

**वैशम्पायनः > वइसंपाअणो**

"वैशम्पायनः" इति स्थिते "दैत्यादिष्वइ (त्)" (प्रा. १.३६) इत्यनेन सूत्रेण "आदि-ऐ" कारस्य "अइ" इति आदेशे "वइशम्पायन" इति जाते "शषोः सः" (प्रा. 2.43) इत्यनेन सूत्रेण "श्" कारस्य "स्" कारे "वइसम्पायन" इति स्थिते "ययि तदवर्गान्त" (प्रा. ४.१७) इत्यनेन सूत्रेण 'म्' इत्यस्य पक्षे अनुस्वारे "वइसंपायन" इति जाते, "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'य्' इत्यस्य लोपे, "वइसंपाअन" इति जाते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण "न्" कारस्य "ण्" कारे, "वइसंपाअण इति प्राप्ते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "वइसंपाअणो" इति रूपं सिद्धम्।

**समन्वयः**

सदानन्द आचार्यस्य मतेन, पूर्वसूत्र "ऐत एत्" (प्रा. १.३५) इत्यनेन सूत्रेण "ऐ" इत्यस्य "ए" कारे उभयरूपं प्राप्तम्।

**३७. दैवा वा**

**सुबोधिनी**

अइत्त्वं वा स्यात्। दइवं पक्षे। एत्त्वमेव देव्वं॥ ३८॥

**सञ्जीवनी**

दैवशब्दे ऐकारस्य अइत् स्याद् वा। दइवं देव्वं दैवम्। एकारादेशपक्षे सेवादिष्विति वस्य द्वित्वम्॥ ३८॥

**प्राकृतमञ्जरी**

**दैवशब्दे य ऐकारस्तस्य स्यादेद्विकल्पतः।**
**दैवं निगद्यते देव्वं पक्षे दइवमुच्यते॥**

मनोरमा

दैव शब्दे ऐकारस्य "अइ" इत्ययमेवमादेशो भवति वा। दइवं, देव्वं, अनादेशपक्षे नीड़ादित्वात् द्वित्वम्।

अम्बिका

"आदेरतः" (प्रा. १.१) इत्यतः "आदेः", "ऐत एत्" (प्रा. १. ३५) इति सूत्रतः "ऐतः", तथा "दैत्यादिष्वइ (त्)" (प्रा. १.३६) इति सूत्रतः "अइ" एतानि पदानि अनुवर्त्तन्ते।

**सूत्रार्थः**

"दैव" इति संस्कृत शब्दस्य आदि "ऐ" (ऐत्) कारस्य प्राकृते विकल्पेन "अइ" भवति।

यथा—

**दैवम् > देव्वं, दइवं**

"दैवम्" इति स्थिते "दैवा वा" (प्रा. १.३७) इत्यनेन सूत्रेण "दैव" शब्दस्य आदि "ऐ" कारस्य विकल्पे "अइ" इति आदेशे "दइव" इति जाते सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "दइवं" इति रूपं सिद्धम्। यत्र "अइ" न आदिश्यते, तत्र तु नीड़ादिगणे पठितत्वात् "व्" कारस्य द्वित्व भवति।

३८. इत्सैन्धवे

सुबोधिनी

इत्त्वं स्यात्। एत्त्वापवादः। सिंधवं॥ ३९॥

सञ्जीवनी

सैन्धवशब्दे ऐकारस्य इकारादेशः स्यात्। एत्त्वापवादः। सिंधवं सैन्धवम्॥ ३९॥

प्राकृतमञ्जरी

**सैन्धवे योऽयमैकारस्तस्येकारो विधीयते।**

**ततः सैन्धवमित्येतत् सन्तः शंसन्ति सिन्धवं॥**

### मनोरमा

सैन्धवशब्दे ऐकारस्य इकारो भवति। सिन्धवं।

### अम्बिका

आदेरतः (प्रा. १.१) इति सूत्रतः "आदेः", तथा "ऐत एत्" (प्रा. १.३५) इति सूत्रतः "ऐतः" पदद्वयमनुवर्त्तते।

### सूत्रार्थः

"सैन्धव" इति संस्कृत शब्दस्य आदि "ऐ" (ऐत्) कारस्य प्राकृते "इ" (इत्) कारः भवति।

### यथा—

**सैन्धवम् > सिन्धवं**

"सैन्धवम्" इति स्थिते "इत्सैन्धवे" (प्रा. १.३८) इत्यनेन सूत्रेण "सैन्धव" शब्दस्य आदि "ऐ" कारस्य "इ" कारे "सिन्धव" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "सिन्धवं" इति रूपं सिद्धम्।

## ३९. ईद् धैर्ये

### सुबोधिनी

इत्त्वं स्यात्। धीरं। ऐत इति निवृत्तम्॥

### सञ्जीवनी

धैर्यशब्दे ऐकारस्य ईत् स्यात्। धीरम्। तूर्यधैर्यादिना रः॥

### प्राकृतमञ्जरी

धैर्यशब्दे य ऐकार ईत्त्वं यस्य विधीयते।
धैर्यशब्दे ततो प्राज्ञा धीरमित्यनुशासते॥

### मनोरमा

धैर्यशब्दे ऐकारस्य ईकारो भवति। धीरं॥

अम्बिका

"आदेरतः" (प्रा. १.१) इत्यतः "आदेः" तथा "ऐत एत्" (प्रा. १.३५) इति सूत्रतः "ऐत" इति पदद्वयमनुवर्तते।

सूत्रार्थः

"धैर्य" इति संस्कृत शब्दस्य आदि "ऐ" (ऐत्) कारस्य स्थाने प्राकृते विकल्पेन "ई" (ईत्) कारः भवति।

यथा–

धैर्यम् > धीरं

"धैर्यम्" इति स्थिते "ईद् धैर्ये" (प्रा. १.३९) इत्यनेन सूत्रेण आदि "ऐ" कारस्य "ई' कारे "धीर्यम्" इति जाते, "तूर्य धैर्यसैन्दर्याश्चर्यपर्यन्तेषु रः" (प्रा. ३.१८) इत्यनेन सूत्रेण "र्य्" समुदायस्य 'र्' कारे "धीरम्" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "धीरं" इति रूपं सिद्धम्।

४०. ओतोऽद् वा प्रकोष्ठे कस्य वा

सुबोधिनी

ओकारस्य उत्त्वं ककारस्य वकारश्च युगपद्वा भवेत्। पवुट्ठो, पओट्ठो॥

सञ्जीवनी

प्रकोष्ठशब्दे ओकारस्य उत्त्वं ककारस्य वकारश्च युगपद्वा भवति। पवुट्ठो, पओट्ठो, प्रकोष्ठः। सर्वत्र लवरामिति रेफलोपः। ष्टस्य ठ इति ठः। तस्य द्वित्वे वर्गे युजः पूर्व इति टः। पक्षे कगचादिना कलोपः॥

प्राकृतमञ्जरी

अत्त्वमोतः प्रकोष्ठे तत्सन्नियोगेन कस्य च।

वत्त्वं वा स्यात् पवट्ठं वा पओट्ठं वा निगद्यते॥

मनोरमा

प्रकोष्ठ-शब्दे ओकारस्य अकारो भवति वा तत्संयोगेन च ककारस्य

वत्वम्। पवट्ठो, पओट्ठो॥

**अम्बिका**

सूत्रेऽस्मिन् पूर्वसूत्रात् अनुवृतिर्न वर्त्तते।

**सूत्रार्थः**

"प्रकोष्ठ" इति संस्कृत शब्दस्य "ओ" (मध्य) कारस्य स्थाने प्राकृते विकल्पेन "अत्" प्राप्ते "क्" कारस्य स्थाने "व्" कारः भवति।

**यथा–**

**प्रकोष्ठः > पवट्ठो**

"प्रकोष्ठः" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे "पकोष्ठ" इति स्थिते, "ओतोऽद् वा प्रकोष्ठे कस्य वा" (प्रा. १.४०) इत्यनेन सूत्रेण मध्य "ओ" कारस्य "अ" कारे, पकष्ठ इति जाते 'क्' कारस्य स्थाने 'व्' कारे च प्राप्ते "पवष्ठ" इति स्थिते "ष्ठस्य ठः" (प्रा. ३.१०) इत्यनेन सूत्रेण "ष्ठ्" कारस्य "ठ्" कारे "पवठ" इति स्थिते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "ठ्" इत्यस्य द्वित्वे, "पवठ्ठ" इति जाते "वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इत्यनेन सूत्रेण "ठ्" इत्यस्य "ट्" कारे "पवट्ठ" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "पवट्ठो" इति रूपं सिद्धम्।

## ४१. औत ओत्

**सुबोधिनी**

औकारस्य ओत्त्वं स्यात्। जोव्वणं यौवनम्॥४१॥

**सञ्जीवनी**

औत औकारस्य ओकारादेशः स्यात्। तकारोऽसन्देहार्थः। सोहग्गं। दोहग्गं सौभाग्यदौर्भाग्ययोः। खघथादिना भस्य हः। अधो मनयामिति यलोपः। शेषादेशादिना गस्य द्वित्वम्। हकारस्य न भवति। न रहोरिति

निषेधात्। जोव्वणं यौवनम्। आदेर्यो ज इति यस्य जः। नीडादिष्विति वस्य द्वित्वम्। कोसंवी कौशाम्बी। अदातो यथादिषु वेत्यत्यम्। कोत्थहो कौस्तुभः। स्तस्य थ इति थः। तस्य द्वित्वे वर्गे युजः पूर्व इति तः। सोमित्ती सौमित्रिः। कोमुई कौमुदी॥

**प्राकृतमञ्जरी**

औकारस्य भवेदोत्त्वमुत्सर्गेण पदे पदे।
कौमुदी कोमुई तद्वत् कौस्तुभश्चापि कोत्थुहो॥

**मनोरमा**

औकारस्यादेरोकारो भवति। कौमुई, जोव्वणं, कोत्थुहो, कोसम्बी॥ कौमुदी, यौवनम्, कौस्तुम, कौशाम्बी।

**अम्बिका**

"आदेरतः" (प्रा. १.१) इति सूत्रतः "आदेः" पदमनुवर्त्तते।

**सूत्रार्थः**

संस्कृत शब्देषु आदिषु विद्यमानेषु "औ" (अैत्) कारस्य स्थाने प्राकृते "ओ" (ओत्) कारः भवति।

**यथा–**

**कौमुदी > कोमुई**

"कौमुदी" इति स्थिते "अैत ओत्" (प्रा. १.४१) इत्यनेन सूत्रेण "औ" कारस्य "ओ" कारे "कोमुदी" इति जाते, कगचजतदपयवां प्रायो लोपः (प्रा. २.२) इत्यनेन सूत्रेण "द्" कारस्य लोपे "कोमुई" इति रूपं सिद्धम्।

**यौवनम् > जोव्वणं**

"यौवनम्" इति स्थिते "औतओत्" (प्रा. १.४१) इत्यनेन सूत्रेण आदि "औ" कारस्य "ओ" कारे "योवनम्" इति जाते "आदेर्योजः" (प्रा. २.३१) इत्यनेन सूत्रेण आदि "य्" कारस्य "ज्" कारे "जोवनम्" इति स्थिते, "नोणः सर्वत्रः" (प्रा. २.४२) इत्यनेन सूत्रेण "न्" कारस्य

“ण्” कारे जोवणम् इति जाते, “नीड़ादिषु च” (प्रा. ३.५२) इत्यनेन सूत्रेण ‘व्’ कारस्य द्वित्वे “जोव्वणम्” इत्यत्र “सोर्बिन्दुनपुंसके” (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके “सु” इत्यस्य बिन्दुत्वे (अनुस्वारे) “जोव्वणं” इति रूपं सिद्धम्।

### कौस्तुभः > कोत्थुहो

“कौस्तुभः” इति स्थिते “औत ओत्” (प्रा. १.४१) इत्यनेन सूत्रेण आदि “औ” कारस्य “ओ” कारे “कोस्तुभः” इति जाते “स्तस्य थः” (प्रा. ३.१२) इत्यनेन सूत्रेण “स्त्” इत्यस्य “थ्” कारे “कोथुभ” इति जाते, “शेषादेशयोर्द्वित्वमनादौ” (प्रा. ३.५०) इत्यनेन सूत्रेण “थ्” इत्यस्य द्वित्वे “कोथ्थुभ” इति स्थिते, “वर्गेषु युजः पूर्वः” (प्रा. ३. ५१) इत्यनेन सूत्रेण “थ्” कारस्य “त्” कारे “कोत्थुभ” इति जाते, “खघथधभां हः” (प्रा. २.२७) इत्यनेन सूत्रेण “भ्” इत्यस्य “ह” कारे “कोत्थुह” इति जाते “अत ओत् सोः” (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने “सु” इत्यस्य “ओत्वे” “कोत्थुहो” इति रूपं सिद्धम्।

### कौशाम्बी > कोसम्बी

“कौशाम्बी” इति जाते “औत ओत्” (प्रा. १.४१) इत्यनेन सूत्रेण “औ” कारस्य “ओ” कारे “कोशाम्बी” इति स्थिते “शषोः सः” (प्रा. २.४३) इत्यनेन सूत्रेण “श्” इत्यस्य “स्” कारे “कोसाम्बी” इति प्राप्ते “अदातोयथादिषु वा” (प्रा. १.१०) इत्यनेन सूत्रेण “आ” कारस्य “अ” कारे “कोसम्बी” इति रूपं सिद्धम्।

## ४२. पौरादिष्वउ (त्)

सुबोधिनी

एषु औतो अउत् इत्यादिश्यते।
पौरपौरवमौनानि मौलिरौरवकौरवाः।
गोडकौशलसौधनि पौराद्या एवमादयः॥

पउरं पउरिसं मउणं मउली रउरवो। कउरवो गउडो। कउसलं सउहं॥

**सञ्जीवनी**

औत इत्यनुवर्त्तते उत्सौन्दर्यादिष्विति यावत्। पौर इत्यादिषु शब्देषु आदेरौकारस्य अउत् स्यात्। ओत्त्वबाधः। पउरो पौरः। पउरिसं पौरुषम्। इत् पुरुषे रोरिति रुकार उकारस्य इत्त्वम्। मउणं मउली मौनमौलिशब्दयोः। रउरवो रौरवः। कउरवा कौरवाः। जस्प्रत्ययस्य जश्शसोर्लोप इति लोपः। जश्शसङस्यांसु दीर्घ इति दीर्घः। गउडा गौडाः। कउसलं कौशलम्। संउहं सौधम्।

**पौरपौरुषमौनानि मौलिरौरवकौरवाः।**

**गौडकौशलसौधानि पौराद्या एवमादयः॥**

**प्राकृतमञ्जरी**

**पौराकृतिषु शब्देषु औकारस्य भवेदउः।**

**पौरः स्यात् पउरो तद्वद् ज्ञेयमाकृतिजे गणे॥**

**पौरश्च पौरवश्चैव पौरुषं कौरवस्तथा।**

**रौद्रश्चेति विचेतव्यः पौराकृतिगणो बुधैः॥४२॥**

**मनोरमा**

पौर इत्येवमादिषु शब्देषु औकारस्य "अउ" इत्ययमादेशो भवति। पउरो। कउरवो। पउरिसो॥ पौर-कौरव-पौरुषाणि॥ आकृति गणोऽयम्। कौशले विकल्पः - कउसलं, कोसलं॥ कौशलम्॥

**अम्बिका**

"आदेरतः" (प्रा. १.१) इति सूत्रतः "आदेः" "ओत ओत्" (प्रा. १.४१) इत्यतः "औतः" पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

पौरः आदि (कौरवः, पौरषम्, गौड़ः, रौरबः) संस्कृत शब्देषु आदि "औ" कारस्य स्थाने प्राकृते "अउ" (अउत्) भवति।

**यथा—**

**पौरः > पउरो**

"पौरः" इति स्थिते "पौरादिष्वउ (त्)" (प्रा. १.४२) इत्यनेन सूत्रेण

''पौर'' शब्दस्य आदि ''औ'' कारस्य ''अउ'' इति आदेशे पउर इति स्थिते ''अत ओत् सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने ''सु'' इत्यस्य ''ओत्वे'', ''पउरो'' इति रूपं सिद्धम्।

**कौरवः > कउरवो**

''कौरवः'' इति स्थिते ''पौरादिष्वउ (त्)'' (प्रा. १.४२) इत्यनेन सूत्रेण ''आदि-औ'' कारस्य ''अउ'' इति आदेशे ''कउरव'' इति स्थिते, ''अत ओत् सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने सु इत्यस्य ''ओत्वे'', ''कउरवो'' इति रूपं सिद्धम्।

**पौरुषम् > पउरिसं**

''पौरुषम्'' इति स्थिते ''पौरादिष्वउ (त्)'' (प्रा. १.४२) इत्यनेन सूत्रेण आदि - ''औ'' कारस्य ''अउ'' इति आदेशे ''पउरुषम्'' इति जाते ''इत्पुरुषे रोः'' (प्रा. १.२३) इत्यनेन सूत्रेण ''रू'' इत्यस्य 'उ' (उत्) कार-स्थाने 'इ' (इत्) कारादेशे ''पउरिषम्'' इति जाते ''शषोः सः'' (प्रा. २.४३) इत्यनेन सूत्रेण ''ष्'' कारस्य ''स्'' कारे ''पउरिस'' इति प्राप्ते ''सोर्बिन्दुनपुंसके'' (प्रा. 5.30) इत्यनेन सूत्रेण नपुंसके ''सु'' इत्यस्य बिन्दुत्वे ''पउरिसं'' इति रूपं सिद्धम्।

**गौड़ > गउड़ो**

''गौड़ः'' इति स्थिते ''पौरादिष्वउ (त्)'' (प्रा. १.४२) इत्यनेन सूत्रेण आदि - औ कारस्य ''अउ'' इति आदेशे ''गउड़'' इति जाते, ''अत ओत् सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने ''सु'' इत्यस्य ''ओत्वे'' ''गउड़ो'' इति रूपं सिद्धम्।

**रौरवः > रउरवो**

''रौरवः इति स्थिते ''पौरादिष्वउ (त्)'' (प्रा. १.४२) इत्यनेन सूत्रेण आदि-औ कारस्य ''अउ'' इति आदेशे ''रउरव'' इति जाते, ''अत ओत् सोः'' (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने ''सु'' इत्यस्य ''ओत्वे'', ''रउरवो'' इति रूपं सिद्धम्।

## ४३. आ (त्) च गौरवे

### सुबोधिनी

औत आत्त्वम्, चकारात् अउदित्यपि। गारवं गउरवं॥ ४३॥

### सञ्जीवनी

अउदित्यनुवर्तते। गौरवशब्दे औकारस्य आकारादेशो भवति अउच्च। गारवम् गउरवं गौरवम्॥ ४३॥

### प्राकृतमञ्जरी

**औकारस्य भवेदात्त्वं गौरवे चादउस्तथा।**

**तेन स्याद् गारवमिति ज्ञेयं गउरवं तथा॥ ४३॥**

### मनोरमा

गौरव-शब्दे औकारस्य आकारो भवति। चकारादउत्वं च। गारवं, गउरवं।

### अम्बिका

“औत ओत्” (प्रा. १.४१) इति सूत्रतः “औतः” इति पदमनुवर्त्तते।

### सूत्रार्थः

“गौरवम्” इति संस्कृत शब्दस्य “औ” (औत्) कारस्य स्थाने प्राकृते “आ” तथा “अउ” उभयं आदिश्यते।

**यथा–**

**गौरवम् > गारवं, गउरवं**

“गौरवम्” इति स्थिते “आ (त्) च गौरवे” (प्रा. १.४३) इत्यनेन सूत्रेण “औ” कारस्य “आ” कारे “गारव” इति जाते “सोर्बिन्दुनपुंसके” (प्रा ५.३०) इत्यनेन सूत्रेण नपुंसके “सु” इत्यस्य बिन्दुत्वे (अनुस्वारे) “गारवं” इति रूपं सिद्धम्।

पक्षे, “गौरव” इत्यस्य “औ” कारस्य “अउ” इति आदेशे “गउरवं” इति रूपं सिद्धम्।

## ४४. उत्सौन्दर्यादिषु

### सुबोधिनी

औत उत्त्वं स्यात्।

सौंदर्यशौण्डौ पौलोमी औपरिष्टकमौष्टिकौ।

दौवारिकश्चैवमाद्याः सौन्दर्याद्याः प्रकीर्तिताः।

सुंदेरं सुंडो पुलोमी उपरिट्ठिअं मुट्ठिओ दुआरिओ॥ ४४॥

### सञ्जीवनी

सौन्दर्यसदृशेषु शब्देषु औकारस्य उत्त्वं स्यात्। सुन्देरं सौन्दर्यम्। शय्यादिषु इत्येत्त्वम्। तूर्यधैर्यादिना यस्य रः। सुण्डो शौण्डः। शषोः स इति शस्य सः। पुलोमी पौलोमी। उवविट्ठअं औपविष्टकम्। पो व इति वः। ष्टस्य ठ इति ठः। तस्य द्वित्वे वर्गे युजः पूर्व इति टः। कगचादिना कलोपः। एवं मुट्ठिओ, मौष्टिकम्। दुआरिओ दौवारिकः।

सौन्दर्यशौण्डौ पौलोमी औपविष्टकमौष्टिकौ।

दौवारिकस्तथेत्याद्याः सौन्दर्याद्याः प्रकीर्तिताः॥ ४४॥

### प्राकृतमञ्जरी

औकारस्य भवेदुत्त्वं सौन्दर्य्यादिषु तद्यथा।

सौन्दर्य्यमपि सुन्देरं शौण्डः सुण्डो निगद्यते॥

सौन्दर्य-शौण्ड-कौक्षेयास्तथा मौञ्जायनोऽपि वा।

तथा दौवारिकश्चेति सौन्दर्य्यादिरयं गणः॥ ४४॥

### मनोरमा

सौन्दर्य इत्येवमादिषु औकारस्य उकारो भवति। सुन्देरं। मुञ्जाअणो। सुण्डो। कुक्खेअओ। दुव्वारिओ॥ सौन्दर्य-मौञ्जायन-शौण्ड-कौक्षेयक, दौवारिकाजः।

### अम्बिका

"आदेरतः" (प्रा. १.१) इत्यतः "आदेः" "औत ओत्" (प्रा. १. ४१) इति सूत्रतः "औतः" च पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

"सौन्दर्यम्" आदि (मौञ्जायनः, शौण्डः, कौक्षेयकः, दौवारिकः) संस्कृत शब्देषु आदिषु विद्यमानेषु "औ" (औत्) कारस्य स्थाने प्राकृते 'उ' कारः (उत्) भवति।

**यथा–**

**सौन्दर्यम् > सुन्देरं**

"सौन्दर्यम्" इति स्थिते "उत्सौन्दर्यादिषु" (प्रा. १.४४) इत्यनेन सूत्रेण आदि-"औ" कारस्य "उ" कारे "सुन्दर्यम्" इति स्थिते, "तूर्य धैर्य सौन्दर्याश्चिर्यपर्यन्तेषु रः" (प्रा. ३.१८) इत्यनेन सूत्रेण "र्य्" समुदायस्य 'र्' कारे "सुन्दरम्" इति जाते "ए शय्यादिषु" (प्रा. १.५) इत्यनेन सूत्रेण 'अ' कारस्य 'ए' कारे "सुन्देरम्" इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "सुन्देरं" इति रूपं सिद्धम्।

**मौञ्जायनः > मुञ्जाअणो**

"मौञ्जायन" इति स्थिते "उत्सौन्दर्यादिषु" (प्रा. १.४४) इत्यनेन सूत्रेण आदि-"औ" कारस्य "उ" कारे "मुञ्जायन" इति स्थिते "कगचजतदपयवां' प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "य्" कारस्य लोपे "मुञ्जाअन" इति स्थिते, "नो णः सर्वत्रः" (प्रा. २.४२) इत्यनेन सूत्रेण "न्" कारस्य "ण्" कारे "मुञ्जाअण" इति प्राप्ते "अत ओत् सोः" (प्रा. 5.1) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "मुञ्जाअणो" इति रूपं सिद्धम्।

**कौक्षेयकः > कुक्खेअओ**

"कौक्षेयकः" इति स्थिते "उत्सौन्दर्यादिषु" (प्रा. १.४४) इत्यनेन सूत्रेण "आदि-औ" कारस्य "उ" कारे "कुक्षेयकः" इति स्थिते. "ष्कस्कक्षां खः" (प्रा. ३.२९) इत्यनेन सूत्रेण "क्ष्" इत्यस्य "ख्" कारे "कुखेयक" इति जाते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "ख्" इत्यस्य द्वित्वे "कुख्खेयक" इति जाते "वर्गेषु युजः पूर्वः" (प्रा. ३. ५१) इत्यनेन सूत्रेण "ख्" इत्यस्य "क्" कारे "कुक्खेयक" इति

स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण क्य् कारयोः लोपे "कुक्खेअअ" इति प्राप्ते "अत ओत् सोः" (प्रा. ५. १) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "कुक्खेअओ" इति रूपं सिद्धम्।

## दौवारिकः > दुव्वारिओ

"दौवारिकः" इति स्थिते "उत्सौन्दर्यादिषु" (प्रा. १.४४) इत्यनेन सूत्रेण आदि-"औ" कारस्य "उ" कारे "दुवारिक" इति स्थिते, "कगचजतदपयवा प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "क्" कारस्य लोपे "दुवारिअ" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "दुवारिओ" इति रूपं सिद्धम्।

## द्वितीयः परिच्छेदः

# अयुक्तविधिः

### १. अयुक्तस्यानादौ

**सुबोधिनी**

अतः परं यत्कार्य तदयुक्तस्य हलन्तरांयुक्तस्याऽनादौ मध्ये वर्णयोः स्थितस्य वेदितव्यम्। अधिकारसूत्रमिदम्॥१॥

**सञ्जीवनी**

अधिकारोऽयम्। यदित ऊर्ध्वमनुक्रमिष्यामस्तदयुक्तस्यासंयोगवतः अनादौ मध्ये स्थितस्य हलो भवतीति वेदितव्यम्। अयुक्तस्येति शषोः स (सूत्र २.३९) इत्यतः प्रागयमधिकारः। अनादावित्यस्य तु आदेर्यो ज (सूत्र २.२८) इत्यतः प्राक्॥१॥

**प्राकृतमञ्जरी**

अधिकारस्त्वयुक्तस्येत्यापरिच्छेदपूरणात्।
अनादाविति चादेर्योज इत्यस्माद्विधेः पुरा॥
अयुक्तस्य हलान्येन स्वेन वा विधिरुत्तरः।
अनादौ वर्त्तमानस्य पदेष्वित्यवगम्यताम्॥ १॥

**मनोरमा**

अधिकारोऽयम् इत उत्तरं यद्वक्ष्यामस्तदयुक्तस्य व्यंजनस्यानादौ वर्त्तमानस्य कार्य भवतीत्येवं वेदितव्यम्। वक्षते कादीनां लोपः। मउड़ं। अयुक्तस्येति किम्? अग्घो। अक्को। "अनादौ" इति किम्? कमलं अयुक्तस्येतदापरिच्छेद समाप्तेः। अनादाविति च आ जकारविधानात्॥

**अम्बिका**

अयमधिकार सूत्रम्। आपरिच्छेदम् "अयुक्तस्य" पदस्य तथा "अनादौ" पदस्याधिकारः "य्" कारस्य स्थाने "ज्" कारस्य विधानं सूत्रं यावदर्थात् "आदेर्यो जः" (२.३१) इति सूत्रं पर्यन्तं अधिकृतम्।

**सूत्रार्थः**

सम्पूर्णं द्वितीय परिच्छेदे अन्तर्गतानाम् सूत्राणाम् विधानं तु अयुक्त व्यञ्जन समुदायस्य अनादौ अर्थात् मध्य तथा अन्त्य वर्णे भवति।

**समन्वयः**

द्वितीय परिच्छेदे असंयुक्त व्यञ्जनवर्णेषु केवलं शब्दस्य मध्यस्थ तथा अन्त्य व्यञ्जनानाम् लोपः तथा विकारस्य कार्यं अनुष्ठीयते। सुत्रे "अयुक्तस्य" पदस्य ग्रहणं "अर्धः > अग्घो" आदि शब्दानाम् संयुक्त व्यञ्जनस्य विकाराप्राप्ति तथा "अनादौ" इत्यस्य ग्रहणं "कमलं" आदि शब्देषु आदि व्यंजनस्य लोपाऽभाव निमित्तं।

**२. कगचजतदपयवां प्रायो लोपः**

**सुबोधिनी**

कादीनां व्यञ्जनमात्राणां लोपविधौ ग्रहणम्, अकारस्त्वेषामुच्चारण-मात्रार्थम्। यथा तस्माच्छसो नः पुंसीत्यादौ नकाराद्युत्तरमकारः। कादीनामसंयुक्तानामनादौ स्थितानां लोपः स्यात्। वउलो वकुलः। साअरो सागरः रअणा रचना रअणी रजनी सुरअं सुरतं मअणो मदनः रूअं रूपं आउहं आयुधं कई कविः। अयुक्तस्येति किम्? अनादाविति किम्। कंकणो कङ्कणः। गंगा गङ्गेत्यादयः। 'प्रायःशब्दः कगादीनां लोपातिव्यातिबाधकः'। तेन अकोवणो अकोपनः सगअं स्वगतं चूचुअं चूचुकं सदअं सदयमित्यादयः सिध्यन्ति। 'ईषत्स्पष्टः प्रयोज्यो यः क्वचिल्लुप्तेषु कादिषु।' कणयं कनकं चणया चनकाः। गयणं गगनं वयणं वदनं मयणो मदनः इत्यादौ॥२॥

**सञ्जीवनी**

कगचादीनां व्यञ्जनमात्रं प्रत्येकं निर्दिश्यते। अकारस्त्वेषामुच्चारणार्थः। ततो द्वन्द्वः। एषां कादीनां नवानामयुक्तानामसंयोगवतामनादौ मध्ये स्थितानां प्रायो बाहुल्येन लोपः। कस्य-बउलो वराई बकुलवराक्योः। गस्य-साअरो णअरं सागरनगरयोः। चस्य-रअणा सुइरं रचनासुचिरयोः। जस्य-मुअणो रअणी सुजनरजन्योः। तस्य-असई सुरअं असतीसुरतयोः। दस्य-मअणं सअणं मदनसदनयोः। पस्य-रूअं भूओ रुपभूपयोः। यस्य-आउहं सरऊ

आयुधसरव्वोः। वस्य-कई कविः। सुभिस्सुप्सु दीर्घः। देअरो देवरः। अयुक्तस्येति किं कङ्कणो कङ्कणः। गङ्गा गङ्गैव। अञ्चलं अञ्चलमेव चञ्चलो चञ्चल इत्येवमादयः। 'प्रायःशब्दः कगादीनां लोपातिव्याप्ति-बाधकः'। अकोवणो अकोपनः। पो वः इति वः। सगअं स्वगतं। सर्वत्र लवरामिति वलोपः। चूचुअं चूचुकं। सदअं सदयमित्यादयः। 'ईषत्स्पृष्टः प्रयोज्यो यः क्वचिल्लुप्तेषु कादिषु'। कणयं कनकं चणया चणकाः। जश्शसोर्लोप इति जसो लोपः। जश्शस्ङस्यांसु दीर्घः इति दीर्घः। गयणं गगनं। वयणं वदनं। मयणो मदन इत्यादौ। 'गत्वं मदकले कस्य तथा मरकतेऽपि च'। मयगलो मदकलः। मरगयं मरकतं तदयोर्लोपे कृते ईषत्स्पृष्टयकारः॥ २॥

**प्राकृतमञ्जरी**

कगचानां जकारस्य तदपानां यवोरपि।
नवानाञ्च हलामुक्तः प्रायो लोपः पदे पदे॥
बहुलं प्राय इत्युक्तं प्रायः कात्यायनेन वै।
यथा चिह्नादौ चो लोपे न प्रतिज्ञा विरुध्यताम्॥
कस्य लोपे भवेत् काकः काओ गस्य नगो णओ।
चस्य काचो भवेत् काओ जस्यापि न भुजो भुओ॥
तस्य भूतं भवेद् भूअं दस्य तद्वत् पदं पअं।
पस्य पापं विदुः पाअं यस्य लोपे स्वयं सअं॥
वस्य सेवा भवेत् सेआ प्रायो लोपनिदर्शनम्।
प्राय इत्यस्य शब्दस्य बहुलार्थत्वविभ्रमात्॥
श्रुतिस्वारस्यवैरस्ये लोपालोपनियामके।
अंसुजलं सतरंगं पलअजलं वणगओ च बहुलत्वात्।
अकृत प्रायो लोपाः श्रुतिवैरस्यात् किलेष्यन्ते॥ २॥

**मनोरमा**

कादीनां नवानां वर्णानामयुक्तानामनादौ वर्त्तमानानां प्रायो लोपो भवति। कस्य तावत्– मउलो। णउलं। गस्य–माअरो। णअरं। चस्य–वअणं।

सूई। जस्य–गओ। रअदं। तस्य–कअं। विआणं। दस्य–गआ। मओ। पस्य–कई। विउलं। सूउरिसो। सुपुरुष इति यद्यपि उत्तरपदस्य पुरुष शब्दस्यादिस्तथापि लोपो भवति इत्यनेन ज्ञापयति वृत्तिकारः, यथा उत्तरपदादिरनादिरिवेति। यस्य–वाउणा। णअणं। वस्य–जीअं। दिअहो।

मुकुल। नकुल। सागर। नगर। वचन। सूची। गज। रजत। कृत। वितान। गदा। मद। कपि। विपुल। सुपुरुष। वायुना। नयन। जीव। दिवस।

प्रायो ग्रहणाद् यत्र श्रुति सुखमस्ति तत्र न भवत्वेव। सुकुसुमं। पिअगमणं। सचावं। अवजलं। अतुलं। आदरो। अपारो। अजसो। सबहूमाणं। सुकुसुम। प्रियागमन। सचाप। अपजल। अतुल। आदर। अपार। अयशः। सबहुमान। अयुक्तस्यैव। सक्को। मग्गो। शक्र। भार्ग॥ अनादावित्येव। कालो। गन्धो। काल। गन्ध॥२॥

## अम्बिका

सूत्रेऽस्मिन् परिच्छेदस्य प्रथमसूत्र "अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य" तथा "अनादौ" पदद्वयम् अनुवर्त्तते।

## सूत्रार्थः

संस्कृत शब्दानाम् असंयुक्त तथा अनादौ विद्यमाने क् ग् च् ज् त् द् प् य् तथा व् इति व्यंजन वर्णानाम् प्राकृत भाषायाम् प्रायतः लोपः भवन्ति।

### "क्" लोपः – मुकुलः > मउलो

मुकुलः इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन 'क्' कारस्य लोपे "मुउल" इति जाते "अन्मुकुटादिषु" (प्रा. १.२२) इति सूत्रेण आदि 'उ' कारस्य 'अ' कारे "मउल" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अकारान्त शब्दस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे" "मउलो" रूपं सिद्धम्।

### नकुलः > णउलो

"नकुलः" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "क्" कारस्य लोपे "नउल" इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन 'न्' कारस्य 'ण्' कारे "णउल" इति

जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्त शब्दस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे", "णउलो" इति रूपं सिद्धम्।

### "ग्" लोपः – सागरः > साअरो

"सागरः" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'ग्' कारस्य लोपे "साअर" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे" "साअरो" इति रूपं सिद्धम्।

### नगरम् > णअरं

"नगर" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'ग्' कारस्य लोपे 'नअर' इति जाते "नोणः सर्वत्र" (प्रा. २.४२) इति सूत्रेण 'न्' कारस्य "ण्" कारे 'णअर' इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसकलिङ्गी शब्दानाम् "सु" इत्यस्य अनुस्वारे प्राप्ते "णअरं" रूपं सिद्धम्।

### "च" लोपः – वचनम् > वअणं

"वचनम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "च्" कारस्य लोपे "वअनम्" इति जाते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण "न्" कारस्य "ण्" कारे वअणम् इति जाते "सोर्बिन्दुनपुंसके" (प्रा. ५.३) इत्यनेन सूत्रेण नपुंसके सु इत्यस्य बिन्दुत्वे (अनुस्वारे) "वअणं" रूपं सिद्धम्।

### सूची > सूई

सूची इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन "च्" कारस्य लोपे 'सूई' इति रूपं प्राप्तम्।

### "ज" लोपः – गजः > गओ

"गज" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "ज्" कारस्य लोपे 'गअ' इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओ"त्वे "गओ" इति रूपं सिद्धम्।

### रजतम् > रअदं

"रजतम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "ज्" कारस्य लोपे "रअतम्" इति जाते "ऋत्वादिषु तोदः" (प्रा. २.७) इत्यनेन सूत्रेण अनादौ विद्यमाने 'त्' कारस्य स्थाने 'द्' कारे 'रअदम्' इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "रअदं" रूपं सिद्धम्।

### त लोपः – कृतम् > कअं

"कृतम्" इति स्थिते "ऋतोऽत्" (प्रा. १.२७) इत्यनेन सूत्रेण आदि ऋकार (ऋत्) स्य स्थाने अकारे (अत्) "कतम्" इति जाते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'त्' कारस्य लोपे "कअ" इति जाते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनस्वारे) "कअं" रूपं सिद्धम्।

### वितानम् > विआणं

"वितानम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "त्" कारस्य लोपे "विआन" इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण "न्" कारस्य 'ण्' कारे 'विआण' इति रूपं जाते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "विआणं" रूपं सिद्धम्।

### "द" लोपः – गदा > गआ

"गदा" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "द्" कारस्य लोपे 'गआ' इति रूपं जातम्।

### मदः > मओ

"मदः" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'द्' कारस्य लोपे "मअ" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा-विभक्ति एकवचने 'सु' इत्यस्य 'औत्वे', "मओ" रूपं सिद्धम्।

### "प" लोपः – कपिः > कई

'कपि' इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'प्' कारस्य लोपे "कइ" इति जाते "सुभिस्सुप्सुदीर्घः (प्रा. ५.१८) इति सूत्रेण "इ" कारस्य 'ई' कारे "कई" इति रूपं सिद्धम्।

### विपुलम् > विउलं

"विपुलम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "प्" कारस्य लोपे "विउल" इति जाते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "विउलं" इति रूपं सिद्धम्।

### "य" लोपः – वायुः > वाऊ

"वायु" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २. २) इत्यनेन सूत्रेण "य्" कारस्य लोपे "वाउ" इति जाते "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण प्राकृत इकारान्त तथा उकारान्त शब्दानाम् संस्कृतस्य सु, भिस्, तथा सुप् विभक्ति प्रत्ययानाम् उपस्थितौ मूलशब्दस्य अन्तिम 'इ' कारस्य तथा 'उ' कारस्य दीर्घ ई कारः ऊ कारश्च भवति।

### नयनम् > णअणं

"नयनम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २. २) इत्यनेन सूत्रेण 'य्' कारस्य लोपे "नअनम्" इति जाते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे "णअणम्" इति जाते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इति सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे अनुस्वारे "णअणं" इति रूपं जातम्।

### "व" लोपः – दिवसः > दिअहो

"दिवस" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २. २) इत्यनेन सूत्रेण 'व्' कारस्य लोपे 'दिअस" इति जाते "दिवसे सस्य" (प्रा. २.४६) इति सूत्रेण "दिवस" शब्दे 'स्' कारस्य 'ह्'

कारे 'दिअह'' इति जाते "अत ओत् सोः" (प्रा. ५.१) इति सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "दिअहो" इति रूपं सिद्धम्।

**जीवः > जीओ**

जीव इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'व्' कारस्य लोपे "जीअ" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इति सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओ"त्वे "जीओ" इति रूपं जातम्।

**समन्वयः**

सूत्रे "प्रायः" शब्दस्य ग्रहणं तु उच्चारण श्रुतिसुख शब्देषु उपरोक्त ध्वनिनां लोपाऽभाव प्रकाशयितुम्। उदाहरणार्थं–

सुकुसुमम् > सुकुसुमं, प्रियगमनम् > पिअगमणं आदि शब्देषु 'क्' तथा 'ग्' ध्वन्योः लोपर्न भवति।

व्यञ्जनवर्णानां लोपे सति तेषु विद्यमानेषु स्वराणां लोपर्न भवति। यथा- "मुकुल" इत्यस्य 'क्' कारस्य लोपेऽपि 'उ' इत्यस्य लोपो न भवति।

**३. यमुनायां मस्य**

**सुबोधिनी**

**मकारस्य लोपः स्यात्। जउणा॥३॥**

**सञ्जीवनी**

लोप इत्यनुवर्तते। यमुनाशब्दे मस्य लोपो भवति। जउणा। आदेर्यो ज इति जः॥३॥

**प्राकृतमञ्जरी**

**यमुनायां मकारस्य लोपः सोऽयं विधीयते।**

**पूर्वसूत्राधिकारेण यमुना जउणा मता॥३॥**

**मनोरमा**

**यमुनाशब्दे मकारस्य लोपो भवति। जउणा।**

**अम्बिका**

अयुक्तस्यानादौ (प्रा. २.१) इत्यतः अयुक्तस्य तथा अनादौ पदद्वयमनुवर्तते।

**सूत्रार्थः**

यमुना शब्दे अनादौ विद्यमाने अंसयुक्त 'म' वर्णस्य प्राकृते लोपर्भवति।

**यथा–**

**यमुना > जउणा**

"यमुना" इति स्थिते "यमुनायां मस्य" (प्रा. २.३) इति सूत्रेण 'म्' कारस्य लोपे 'यउना' इति स्थिते "आदेर्यो जः" (प्रा. २.३२) इति सूत्रानुसारेण आदिभूतस्य 'य्' कारस्य 'ज्' कारे "जउना" इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इति सूत्रेण 'न्' कारस्य 'ण्' कारे "जउणा" इति रूपं सिद्धम्।

**४. स्फटिकनिकषचिकुरेषु कस्य हः**

**सुबोधिनी**

**एषु ककारस्य हकारः स्यात्। फलिहो निहसो चिहुरो सीहरो॥**

**सञ्जीवनी**

क इत्यक्षरं षष्ठयन्तम्। एषु चतुर्षु शब्देषु कस्य हत्वं स्यात्। पूर्वेण लोपः प्राप्तः। उत्तरसूत्रेषु च आदेशस्याकार उच्चारणार्थः। एवमादिपरिच्छेदपरिसमाप्तेः। फलिहो स्फटिकः। उपरि लोप इति सलोपः। स्फटिके ल इति टस्य लः। णिहसो निकषः। चिहुरो चिकुरः। सीहरो शीकरः॥४॥

**प्राकृतमञ्जरी**

**स्फटिके निकषे तद्वच्चिकुरे शीकरेऽपि च।**

**हत्वं विधीयते कस्य क एव प्रकृतौ यतः॥**

**स्फटिकं फलिहं प्राहुर्निकषं णिहसं तथा।**

**चिकुरं चिहुरं भूयः शीकरञ्चापि सीहरं॥ ४॥**

**मनोरमा**

अनादाविति वर्तते। एषु कस्य हकारो भवति। लोपापवादः। फलिहो। णिहसो। चिहुरो॥

**अम्बिका**

सूत्रमिदं, "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इति लोप सूत्रस्य अपवादः। "अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः 'अनादौ' पदमनुवर्त्तते।

**सूत्रार्थः**

स्फटिक, निकष तथा चिकुर आदि संस्कृत शब्दानाम् अनादि 'क्' कारस्य स्थाने प्राकृते 'ह्' कारः भवति।

**स्फटिकः > फलिहो**

'स्फटिक' इति स्थिते "स्पस्य सर्वत्र स्थितस्य" (प्रा. ३.३६) इति सूत्रेण 'स्प' इत्यस्य 'फ' इत्येवमादेशे 'फटिक' इति जाते "स्फटिके लः" (प्रा. २.२२) इति सूत्रेण 'ट्' कारस्य 'ल्' कारे 'फलिक' इति जाते "स्फटिकनिकष चिकुरेषु कस्य हः" (प्रा. २.४) इति सूत्रेण 'क्' कारस्य 'ह्' कारे 'फलिह' इति स्थिते "अत ओत् सोः' (प्रा. ५.१) इति सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य ओत्वे, "फलिहो" रूपं सिद्धम्।

**निकषः > णिहसो**

निकषः इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण "न्" कारस्य "ण्" कारे "णिकष" इति स्थिते "स्फटिकनिकषचिकुरेषु कस्य हः" (प्रा. २.४) इति सूत्रेण "क्" कारस्य "ह्" कारे, "णिहष" इति जाते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण "ष्" कारस्य स् कारे "णिहस" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन

सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "णिहसो" इति रूपं सिद्धम्।

चिकुरः > चिहुरो

"चिकुरः" इति स्थिते "स्फटिकनिकषचिकुरेषु कस्य हः" (प्रा. २.४) इति सुत्रेण "क्" कारस्य 'ह्' कारे "चिहुर" इति जाते "अत ओत् सोः" (प्रा. ५.१) इति सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने सु इत्यस्य ओत्वे, "चिहुरो" पदम् सिद्धम्।

५. शीकरे भः –

मनोरमा

शीकर शब्दे क् कारस्य 'भ्' कारो भवति। सीभरो।

अम्बिका

अध्यायस्य प्रथम सूत्रं "अयुक्तस्यानादौ" (प्रा. २.५) इत्यतः "अनादौ" इत्यस्य अनुवृत्तिर्भवति।

सूत्रार्थः

संस्कृत "शीकर" शब्दस्य "क्" कारस्य स्थाने प्राकृते "भ्" कारः भवति।

यथा–

शीकरः > सीभरो

"शीकरः" इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे, "सीकर" इति स्थिते "शीकरे भः" (प्रा. २.५) इत्यनेन सूत्रेण 'क्' कारस्य 'भ्' कारे, "सीभर" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य ओत्वे "सीभरो" इति रूपं सिद्धम्। सूत्रस्यास्य सुबोधिनी सञ्जीवनी प्राकृतमञ्जरीटीकाः नोपलभ्यते।

६. चन्द्रिकायां मः

सुबोधिनी

ककारस्य मकारः स्यात्। चंदिमा॥ ५॥

**सञ्जीवनी**

क इत्यनुवर्तते। चन्द्रिकाशब्दे कस्य मत्वं भवति। चंदिमा। द्रे रो वेति रलोपः॥५॥

**प्राकृतमञ्जरी**

**चन्द्रिकायां ककारस्य मकारादेश उच्यते।**
**तेनेह चन्द्रिकाशब्दे रूपं सिध्यति चन्दिमा॥६॥**

**मनोरमा**

चन्द्रिकाशब्दे ककारस्य मकारो भवति। चन्दिमा।

**अम्बिका**

अध्यायस्य प्रथमसूत्रं "अयुक्तस्याानादौ" (प्रा. २.१) इत्यतः अनादौ पदमनुवर्तते।

**सूत्रार्थः**

"चन्द्रिका" इति संस्कृत शब्दस्य 'क्' कारस्य स्थाने प्राकृते 'म्' कारः भवति।

**यथा**

चन्द्रिका > चन्दिमा

चन्द्रिका इति स्थिते "चन्द्रिकायां मः" (प्रा. २.६) इत्यनेन सूत्रेण 'क्' कारस्य 'म्' कारे, चन्द्रिमा इति जाते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण संयुक्त व्यंजन 'र्' कारस्य लोपे "चन्दिमा" इति रूपं सिद्धम्।

**७. ऋत्वादिषु तो दः**

**सुबोधिनी**

**एषु तकारस्य दकारः स्यात्।**
**ऋत्वागतश्रुतख्यातिततः साम्प्रतनिर्वृताः।**
**प्रतारितरतिप्रीत्य ऋत्वाद्या एवमादयः।**

उदू आअदो सुदं खादी तदो सम्पदः णिव्वुदो पदारिदो रीदि

पीदी। अयं दकारादेशः प्रायेण सौरसेनीमागध्योर्द्रष्टव्यः। महाराष्ट्रयां तकारलोप एव॥ ६॥

**सञ्जीवनी**

त इत्यक्षरं षष्ठ्यन्तम्। ऋतुतुल्येषु शब्देषु तकारस्य दकारादेशो भवति। उदू ऋतुः। उदृत्वादिषु इत ऋकारस्य उत्त्वम्। सुभिस्सुप्सु दीर्घ इति दीर्घः। आआदो आयातः। सुदं श्रुतम्। सर्वत्र लवरामिति रलोपः। शषो सः इति शस्य सः। नपुंसके सोर्बिन्दुरिति बिन्दुः। खादी ख्यातिः। अधो मनयामिति यलोपः। पूर्ववद् दीर्घः। अन्त्यस्य हल इति सलोपः। तदो ततः। सम्पदं साम्प्रतं। अदातो यथादिषु वेत्यत्त्वम्। सर्वत्र लवरामिति रलोपः। 'बिन्द्वादीदूत्परस्येह द्वित्वं शेषस्य नेष्यते' इति पस्य द्वित्वं न भवति। णिव्वुदो निर्वृतः। उदृत्वादिषु ऋकारस्य उत्त्वम्। रलोपे कृते शेषादेशादिना वस्य द्वित्वम्। नो णः इति णः। पदारिदो प्रतारितः। रदी पीदी रतिप्रीत्योः।

**ऋत्वागतश्रुतिख्यातिततः साम्प्रतनिर्वृताः।**

**प्रतारितरतिप्रीत्य ऋत्वाद्या एवमादयः॥**

अयं दकारादेशः प्रायेण सौरसेनीमागध्योर्द्रष्टव्यः। इह तु कगचादिना तलोपः॥ ६॥

**प्राकृतमञ्जरी**

**ऋत्वादिषु पदेषु स्यात्तकारस्य दकारता।**

**भवेद् ऋतुरुदू रत्नं रदणं च हतं हदं॥**

**ऋतु संयतरजतागतहतास्सुदुस्सुद्भ्य उत्तरञ्च कृतम्।**

**संव्यादिभ्यञ्च कृतं प्रतिपत्तीरत्नमृत्वादिः॥ ७॥**

मनोरमा

ऋतु इत्येवमादिषु त कारस्य दकारो भवति। उदू। रअदं। आअदो। आवुदी। णिव्वुदी। संवुदी। सुइदी। आइदी। हदो। संजदो। विउदं। संयादो। संपदि। पड़िवद्दी॥ ऋतु - रजत - आगत - निर्वृत्ति - आवृत्ति - संवृति - सुकृति - आकृति - हत - संयत - विवृत - संयात - सम्प्रति - प्रतिपत्तयः।

**अम्बिका**

प्रथमसूत्र "अयुक्तस्यानादौ' (प्रा. २.१) इत्यतः "अनादौ" पदमनुवर्त्तते।

**सूत्रार्थः**

"ऋतु" आदि संस्कृत शब्दानाम् अनादौ विद्यमाने "त्" कारस्य स्थाने प्राकृते "द्" कारः भवति।

रजत, आगत, निर्वृति, आवृति, संवृति आदि शब्दानाम् ग्रहणार्थम् सूत्रे "आदि" शब्द निर्दिश्यते। अयं नियमः खलु शौरसेनी तथा मागधी प्राकृतं निमित्तम्। म. म. मथुराप्रसाद दीक्षितैः "प्राकृतप्रकाश" स्य आधुनिक शैल्याम् लिखित संस्कृत व्याख्या चन्द्रिकायामप्युक्तम् - अयं दकारादेशः प्रायेण शौरसेनी - मागध्योद्रष्टव्यः। महाराष्ट्रायां त कारलोप एव॥ ७॥

**ऋतुः > उदू**

अस्य प्रक्रियां तु प्रथम परिच्छेदे "उदृत्वादिषु" (प्रा. १.२९) सूत्र प्रसङ्गे द्रष्टव्यं।

**रजतम् > रअदं**

अस्य प्रक्रियां तु अस्मिन् परिच्छेदे "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इति सूत्रस्य 'ज लोप' प्रसङ्गे द्रष्टव्यम्।

**आगतः > आअदो**

'आगत' इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'ग्' कारस्य लोपे "आअत" इति जाते "ऋत्वादिषु तो दः" (प्रा. २.७) इति सूत्रेण 'त्' कारस्य 'द्' कारे, "आअद" इति जाते, अत ओत् सोः (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "आअदो" रूपं सिद्धम्।

**निर्वृतिः > णिव्वुदी**

"निर्वृत्तिः" इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे "णिर्वृत्तिः" इति जाते "उदृत्वादिषु" (प्रा. १.२९) इति सूत्रेण सूत्रस्य आदि पदेन "निर्वृत्ति" शब्दस्य 'ऋ' (ऋत्) कारस्य स्थाने 'उ' कारादेशे "णिर्वुत्ति" इति जाते "सर्वत्र

लवराम्'' (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' इत्यस्य लोपे, ''णिवुति'' इति प्राप्ते ''शेषादेशयोद्वित्वमनादौ'' (प्रा. ३.५०) इत्यनेन 'व्' कारस्य द्वित्वे ''ऋत्वादिषु तो दः'' (प्रा. २.७) इति सूत्रेण ''त्'' कारस्य 'द्' कारे ''सुभिस्सुप्सु दीर्घः'' (प्रा. ५.१८) इत्यनेन 'इ' कारस्य 'ई' कारे णिव्वुदी इति रूपं सिद्धम्।

### आवृतिः > आवुदी

''आवृति'' इति स्थिते ''उदृत्वादिषु'' (प्रा. १.२९) इति सूत्रेण सूत्रस्य आदिपदेन 'आवृति' शब्दस्य 'ऋ' (ऋत्) कारस्य स्थाने 'उ' कारादेशे 'आवुति' इति जाते ''ऋत्वादिषु तो दः'' (प्रा. २.७) इत्यनेन सूत्रेण 'त्' कारस्य 'द्' कारे, ''सुभिस्सुप्सु दीर्घः'' (प्रा. ५.१८) इत्यनेन सूत्रेण 'इ' कारस्य स्थाने दीर्घ ''ई'' कारे ''आवुदी'' इति रूपं सिद्धम्।

### संवृतिः > संवुदी

''संवृति'' इति स्थिते ''उदृत्वादिषु'' (प्रा. १.२९) इति सूत्रेण सूत्रस्य आदि पदेन संवृति शब्दस्य ''ऋ'' (ऋत्) कारस्य स्थाने ''उ'' कारादेशे ''संवुति'' इति जाते, ''ऋत्वादिषु तो दः'' (प्रा. २.७) इत्यनेन सूत्रेण 'त्' कारस्य ''द्'' कारे ''सुभिस्सुप्सु दीर्घः'' (प्रा. ५.१८) इत्यनेन सूत्रेण ह्रस्व ''इ'' कारस्य दीर्घ 'ई' कारे संवुदी इति रूपं सिद्धम्।

### सुकृतिः > सुइदी

''सुकृति'' इति स्थिते ''इदृष्यादिषु'' (प्रा. १.२८) इति सूत्रेण 'ऋ' (ऋत्) कारस्य 'इ' (इत्) कारे 'सुकिति' इति स्थिते ''कगचजतदपयवां प्रायो लोपः'' (प्रा. २.२) इत्यनेन सूत्रेण 'क्' कारस्य लोपे ''सुइति'' इति जाते ''ऋत्वादिषु तो दः'' (प्रा. २.७) इत्यनेन सूत्रेण 'त्' कारस्य 'द्' कारे सुइदि इति प्राप्ते सुभिस्सुप्सु दीर्घः'' (प्रा. ५.१८) इत्यनेन ह्रस्व 'इ' कारस्य 'ई' कारे, ''सुइदी'' इति रूपं सिद्धम्।

### आकृतिः > आइदी

''आकृति'' इति स्थिते ''इदृष्यादिषु'' (प्रा. १.२८) इति सूत्रेण 'ऋ' (ऋत्) कारस्य 'इ' (इत्) कारे ''आकिति'' इति जाते

"कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "क्" कारस्य लोपे, "आइति" इति स्थिते "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यनेन सूत्रेण 'त्' कारस्य 'द्' कारे, "आइदि" इति जाते "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन ह्रस्व 'इ' कारस्य दीर्घ 'ई' कारे "आइदी" रूपं सिद्धम्।

## हतः > हदो

"हत" इति स्थिते "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यनेन सूत्रेण 'त्' कारस्य 'द्' कारे, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे', "हदो" रूपं प्राप्तम्।

## संयतः > संजदो

'संयत' इति स्थिते "आदेर्यो जः" (प्रा. २.३१) (अयुक्तस्यानादौ, प्रा. २.१ इत्यतः "अनादौ" पदस्य अनुवृत्तित्वात्) इत्यनेन सूत्रेण अनादि 'य्' कारस्य 'ज्' कारे "संजत" इति जाते "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यनेन सूत्रेण 'त्' कारस्य 'द्' कारे, "संजद" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१८) इत्यनेन सूत्रेण अदन्तस्य प्रथमा-विभक्ति एकवचने "सु" इत्यस्य 'ओत्वे', 'संजदो' रूपं सिद्धम्।

## विवृतम् > विउदं

'विवृतम्' इति स्थिते "उदृत्वादिषु" (प्रा. १.२९) इत्यनेन सूत्रेण 'ऋ' कारस्य 'उ' कारे "विवुत" इति जाते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'व्' कारस्य लोपे, "विउत" इति प्राप्ते "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यनेन सूत्रेण 'त्' कारस्य 'द्' कारे, "विउद" इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसक शब्दस्य "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "विउदं" रूपं सिद्धम्।

## संयातः > संयादो

'संयात' इति स्थिते "ऋत्वादिषु तोदः" (प्रा. २.७) इत्यनेन 'त्' कारस्य 'द्' कारे, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे" संयादो इति रूपं

सिद्धम्।

### सम्प्रति > संपदि

"सम्प्रति" इति स्थिते "मो बिन्दुः" (प्रा. ४.१२) इत्यनेन 'म्' इत्यस्य बिन्दुत्वे (अनुस्वारे), "संप्रति" इति जाते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे, "संपति" इति प्राप्ते "ऋत्वादिषु तोदः" (प्रा. २.७) इत्यनेन सूत्रेण 'त्' कारस्य 'द्' कारे "संपदि" रूपं सिद्धम्।

### प्रतिपत्ति > पड़िवद्दी

"प्रतिपत्ति" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे "प्रतिसरवेतसपताकासु डः" (प्रा. २.८) इत्यनेन सूत्रेण 'त्' कारस्य 'ड्' कारे, "पो वः" (प्रा. २.१५) इत्यनेन सूत्रेण 'प्' कारस्य 'व्' कारादेशे, "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यनेन सूत्रेण 'त्' कारस्य 'द्' कारे, "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण प्रथमा विभक्ति एकवचने "सु" इत्यस्योपस्थितौ ह्रस्व 'इ' कारस्य दीर्घ 'ई' कारे 'पड़िवदी' रूपं सिद्धम्।

## ८. प्रतिसरवेतसपताकासु डः

### सुबोधिनी

एषु डः स्यात् तस्य। पडिवअणं प्रतिवचनम्। वेडिसो।

पडाआ। 'प्रतिशब्दे तकारस्य रेफलोपावपि क्वचित्'। परिट्ठिअं प्रतिष्ठितम् परिट्ठानं प्रतिष्ठानम्। पइण्णा। प्रतिज्ञा। 'तस्य डत्वं हरीतक्यां प्राभृते मृतके तथा'। हरडई पाहुडं मडओ॥ ७॥

### सञ्जीवनी

त इत्यनुवर्तते ऐरावते वेति यावत्। एषु शब्देषु तकारस्य डत्वं स्यात्। पडिहअं प्रतिहतं। पडिवअणं प्रतिवचनम्। कगचादिना चलोपः। 'प्रतिशब्दे तकारस्य रेफलोपावपि क्वचित्'। परिट्ठिअं प्रतिष्ठितम्। उपरि लोप इत्यादिना षलोपः। पूर्ववदन्यत्। एवं पइण्णा प्रतिज्ञा। म्नज्ञपञ्चाशत्पञ्चदशसु ण इति ज्ञ इंत्यस्य णः। तस्य शेषादेशादिना द्वित्वम्। वेडिसो वेतसः। इदीषदित्यादिना इत्त्वम्। पडाआ पताका।

'तस्य डत्वं हरीतक्यां प्राभृते मृतके तथा'। हरडई हरीतकी। डस्य (१) वशादीकारस्य अत्त्वम्। पाहुडं प्राभृतम्। सर्वत्र लवरामिति रलोपः। खघथादिना हत्वं भस्य। उदृत्वादिष्वित्युत्त्वम्। मडओ मृतकः। ऋतोऽदित्त्यत्त्वम्॥ ७॥

**प्राकृतमञ्जरी**

**प्रतिवेतसयोस्तस्य पताकायाञ्च डो भवेत्।**

**पडिक्छन्दी वेडिसो च पडाआ चेति तत्त्रयम्॥ ८॥**

**मनोरमा**

एषु शब्देषु 'त्' कारस्य डकारो भवति। लोपापवादः। पड़िसरो। वेड़िसो। पड़ाआ।

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इति सूत्रात् "अनादौ" तथा "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यतः "तः" पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

प्रतिसर वेतस तथा पताका आदि संस्कृत शब्दानाम् अनादौ विद्यमाने "त्" कारस्य स्थाने प्राकृते 'ड्' कारः भवति।

**प्रतिसरः > पड़िसरो**

'प्रतिसर' इति स्थिते "प्रतिसरवेतसपताकासु डः" (प्रा. २.८) इति सूत्रेण 'त्' कारस्य 'ड्' कारे "पड़िसर" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे', "पड़िसरो" इति रूपं सिद्धम्।

**वेतस > वेड़िसो**

अस्य प्रक्रियां प्रथमपरिच्छेदे "इदीषत्पक्वस्वप्नवेतसव्यजन-मृदाङ्गाऽङ्गारेषु" (च) (प्रा. १.३) सूत्रप्रसङ्गे द्रष्टव्यम्।

**पताका > पड़ाआ**

'पताका' इति स्थिते "प्रतिसरवेतसपताकासु डः" (प्रा. २.८) इत्यनेन सूत्रेण 'त्' कारस्य 'ड्' कारे, "पड़ाका" इति स्थिते

,"कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' कारस्य लोपे "पड़ाआ" इति रूपं सिद्धम्।

## ९. वसतिभरतयोर्हः

### सुबोधिनी

वसही भरहो॥ ८॥

### सञ्जीवनी

एतयोः शब्दयोस्तकारस्य हत्वं स्यात्। वसही भरहो॥ ८॥

### प्राकृतमञ्जरी

**हत्वं वसतिशब्दे स्याद् भरते तस्य तद् यथा।**
**वसतिं वसहिं विद्याद् भरतं भरहं तथा॥ ९॥**

### मनोरमा

वसति-भरत शब्दयोः तकारस्य हकारो भवति। वसही। भरहो।

### अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अनादौ" तथा "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यस्मात् 'तः' पदद्वयमनुवर्त्तते।

### सूत्रार्थः

'वसति' तथा 'भरत' शब्दयोः अनादौ विद्यमाने 'त्' कारस्य स्थाने प्राकृते 'ह्' कारः भवति।

**वसतिः > वसही**

'वसतिः' इति स्थिते "वसतिभरतयोर्हः" (प्रा. २.९) इत्यनेन सूत्रेण 'त्' कारस्य 'ह्' कारे, "सुभिस्सुप्सु दीर्घः" (प्रा. ५.१८) इत्यनेन सूत्रेण "सु" इति विभक्ति प्रत्यये मूल इ कारस्य दीर्घत्वे "सु" लोपे "वसही" इति रूपं सिद्धम्।

**भरतः > भरहो**

'भरतः' इति स्थिते "वसतिभरतयोर्हः" (प्रा. २.९) इत्यनेन सूत्रेण

'त्' कारस्य 'ह्' कारे, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे' भरहो रूपं सिद्धम्।

१०. गर्भिते णः

**सुबोधिनी**

तस्य णः स्यात्। गब्भिणो॥ ९॥

**सञ्जीवनी**

गर्भितशब्दे तकारस्य णकारादेशो भवति। गब्भिणो। सर्वत्र लवरामिति रलोपः। शेषस्य भस्य द्वित्वे वर्गे युजः पूर्व इति बः॥ ९॥

**प्राकृतमञ्जरी**

शब्दे गर्भितमित्यस्मिन् णकारादेश इष्यते।
तकारस्य ततो रूपं गर्भितस्य तु गब्भिणं॥ १०॥

**मनोरमा**

गर्भित शब्दे 'त्' कारस्य 'ण्' कारो भवति। गब्भिणं।

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अनादौ" पदमनुवर्त्तते।

**सूत्रार्थः**

संस्कृतस्य "गर्भित" शब्दस्य "त्" कारस्यस्थाने प्राकृते "ण्" कारः भवति।

गर्भितम् > गब्भिणं

"गर्भितम्" इति स्थिते "सवत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' इत्यस्य लोपे "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'भ्' इत्यस्य द्वित्वे, "वर्गेषु युजः पूर्वः" (प्रा. ३.५२) इत्यनेन पुनः 'भ्' कारस्य ब् कारे, "गब्भित" इति स्थिते, "गर्भितेणः" (प्रा. २.२०) इत्यनेन सूत्रेण 'त्' कारस्य 'ण्' कारे, "मो बिन्दुः" (प्रा. ४.१२) इत्यनेन सूत्रेण

अन्तिम हल् (व्यंजन) 'म्' कारस्य स्थाने प्राकृते बिन्दुत्वे (अनुस्वारे) "गब्भिणं" रूपं सिद्धम्।

११. ऐरावते च

सुबोधिनी

तस्य णो वा स्यात्। एरावणो एरावओ।। १०।।

सञ्जीवनी

ण इत्यनुवर्तते। ऐरावतशब्दे तकारस्य णकारादेशो भवति वा। एरावणो। पक्षे एरावओ। 'ऐत एत्' इति एत्त्वम्। पक्षे कगचादिना तलोपः।। १०।।

मनोरमा

ऐरावत शब्दे तकारस्य णकारो भवति। एरावणो।

अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अनादौ" "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यतः "तः" इति पदद्वयमनुवर्त्तते।

सूत्रार्थः

ऐरावत इति संस्कृत शब्दस्य अनादौ विद्यमाने 'त्' कारस्यस्थाने प्राकृते 'ण्' कारः भवति।

ऐरावतः > एरावणो

"ऐरावत" इति स्थिते "ऐत एत्" (प्रा. १.३५) इत्यनेन सूत्रानुसारेण आदि 'ऐ' कारस्य 'ए' कारे "एरावत" इति स्थिते, "ऐरावते च" (प्रा. २.११) इत्यनेन सूत्रेण 'त्' कारस्य 'ण्' कारे 'एरावण' इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "एरावणो" इति रूपं सिद्धम्।

१२. प्रदीप्तकदम्बदोहदेषु दो लः

सुबोधिनी

एषु दस्य लः स्यात्। पलित्तं णिजन्तेऽपीष्यते पलाविअम्। कलंबो

दोहलो ॥ ११ ॥

### सञ्जीवनी

इ इत्यक्षरं षष्ठ्यन्तम्। एषु दकारस्य लत्वं स्यात्। पलित्तं। इदीतः पानीयादिषु इति इत्त्वम्। उपरि लोप इत्यादिना पलोपः। शेषस्य द्वित्वम्। णिजन्तेऽपि इष्यते। पलाविअं प्रदीपितम्। कलम्बो कदम्बः। दोहलो दोहदः। यावत् सान्तवद् विधिरिति द्वितीयस्याऽपि लत्वं न भवति। अलादावधिकारात्॥ ११ ॥

### प्राकृतमञ्जरी

**तस्य लत्वं प्रदीप्ते स्यात् कदम्बे दोहदेऽपि च।**

**तत्क्रमेण पलित्तं च कलम्बं दोहलं विदुः॥ १२॥**

### मनोरमा

एषु शब्देषु द कारस्य 'ल कारो भवति। पलित्तं। कलंबो। दोहलो।

### अम्बिका

''अयुक्तस्यानादौ'' (प्रा. २.१) इत्यतः 'अनादौ' पदमनुवर्तते।

### सूत्रार्थः

प्रदीप्त, कदम्ब, तथा दोहद आदि संस्कृत शब्दानाम् अनादौ विद्यमाने 'द्' कारस्य स्थाने 'ल्' कारः भवति।

### यथा–

**प्रदीप्तः > पलित्तो**

'प्रदीप्त' इति स्थिते ''सर्वत्र लवराम्'' (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' इत्यस्य लोपे ''पदीप्त'' इति स्थिते, ''प्रदीप्तकदम्बदोहदेषु दो लः'' (प्रा. २.१२) इत्यनेन सूत्रेण ''द्'' इत्यस्य 'ल्' कारे, ''पलीप्त'' इति स्थिते ''इदीतः पानीयादिषु'' (प्रा. १.१८) इत्यनेन सूत्रेण आदि पदेन ''पानीय'' अतिरिक्त अन्य शब्दानाम् दीर्घ 'ई' कारस्य ह्रस्व 'इ' कारे, ''पलिप्त'' इति जाते, (युक्तस्य) ''उपरि लोपः कगडतदपषसाम्'' (प्रा. ३.१) इत्यनेन सूत्रेण 'प्' इत्यस्य लापे, ''पलित'' इति जाते

"शेषादेशयोद्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण "त्" कारस्य द्वित्वे, "पलित्त" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे', "पलित्तो" रूपं सिद्धम्।

**कदम्बः > कलम्बो**

'कदम्ब' इति स्थिते "प्रदीप्तकदम्वदोहदेषु दो लः" (प्रा. २. १२) इत्यनेन सूत्रेण 'द्' कारस्य स्थाने 'ल्' कारे "अत ओत् सोः" (प्रा. ५.१) इत्यनेन अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य ओत्वे "कलम्बो" रूपं सिद्धम्।

**दोहदः > दोहलो**

"दोहदः" इति स्थिते "प्रदीप्तकदम्बदोहदेषु दो लः" (प्रा. २. १२) इत्यनेन सूत्रेण 'द्' इत्यस्य 'ल्' कारे दोहल इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे', "दोहलो" रूपं सिद्धम्।

**१३. गद्गदे रः**

**सुबोधिनी**

**दस्यऽयुक्तस्य रः स्यात्। गग्गरो॥ १२॥**

**सञ्जीवनी**

द इत्यनुवर्तते अयुक्तस्येति च। गद्गदशब्दे अयुक्तस्यं दस्य रेफादेशो भवति। गग्गरं। उपरि लोप इत्यादिना दलोपः। शेषादेशादिना गस्य द्वित्वम्। नपुंसके सोर्बिन्दुरिति बिन्दुः॥१२॥

**प्राकृतमञ्जरी**

शब्दे गद्गद इत्यस्मिन् यो दकारोऽस्ति तस्य तु।
विधीयते हि रेफत्वं गद्गदो गग्गरो भवेत्॥१३॥

**मनोरमा**

गद्गदशब्दे दकारस्य रेफादेशो भवति। गग्गरो।

## अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अनादौ" तथा "प्रदीप्तकदम्बदोहदेषु दो लः" (प्रा. २.१२) इत्यतः 'दः' पदद्वयमनुवर्तते।

## सूत्रार्थः

संस्कृत "गद्गदः" शब्दस्य अनादौ विद्यमाने (अन्त्य) 'द्' कारस्य स्थाने प्राकृते 'र्' कारः भवति।

## यथा—

**गद्गदः > गग्गरो**

"गद्गद" इति स्थिते "उपरि लोपः कगडतदपषसाम्" (प्रा. ३.१) इत्यनेन सूत्रेण द् कारस्य लोपे "गगद" इति स्थिते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन 'ग्' इत्यस्य द्वित्वे "गग्गद" इति स्थिते "गद्गदे रः" (प्रा. २.१३) इत्यनेन सूत्रेण 'द्' (अन्त्य) इत्यस्य 'र्' कारे "गग्गर" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा, भिक्ति एकवचने 'सु' इत्यस्य "ओत्वे" "गग्गरो" इति रूपं सिद्धम्।

## १४. संख्यायाञ्च

## सुबोधिनी

संख्याशब्दे अयुक्तस्यानादौ स्थितस्य दस्य रः स्यात्। एआरह एकादश। अयुक्तस्येति किम्? चउद्दह चतुर्दश॥१३॥

## सञ्जीवनी

द इति वर्तते। र इति च। अयुक्तस्यानादाविति च। संख्यावाचिनी शब्दे अयुक्तस्यानादौ स्थितस्य द स्यरेफादेशः स्यात्। एआरह एकादश। कगचादिना कलोपः। दशादिषु ह इति शस्य हः॥ अन्त्यस्य हल इति नलोपः। बारह तेरह द्वादश त्रयोदश। 'लोपः साचो यकारस्य क्वचिन्नित्यं क्वचिन्न वा' इति यलोपः। सन्धावचामित्यादिना अकारविसर्गयोरेत्त्वम्। पण्णरह पञ्चदश। म्नज्ञदिना ञ्चस्य णः। सत्तरह सप्तदश। उपरि लोप इत्यादिना पलोपः। अट्ठारह अष्टादश। ष्टस्य ठ इति ठत्वम्। ष्णान्तां

संख्यां बिना भवेदिति जश्शसङ्स्यांसु दीर्घः इति प्राप्तस्य दीर्घस्याभावः। आयुक्तस्येति किम्? चउद्दह चतुर्दश। अनादाविति किम्? दह दश॥१३॥

**प्राकृतमञ्जरी**

> **संख्यायां सत्सु शब्देषु स्याद् दकारम्य रेफता।**
> **अष्टादशाट्ठारह स्यात् तथा द्वादश बारह॥ १४॥**

**मनोरमा**

संख्यावाचिनी शब्दे यो दकारस्तस्य रेफादेशो भवति। एआरह। बारह। तेरह। एकादश-द्वादश-त्रयोदशाः।

अयुक्तस्येत्येव नेह - चउद्दह।

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः अयुक्तस्य, अनादौ, "प्रदीप्तकदम्बदोहदेषु दो लः" (प्रा. २.१२) इत्यतः 'दः', "गद्गदे रः" (प्रा. २.१३) इत्यतः "रः" इति पदानि अनुवर्त्तन्ते।

**सूत्रार्थः**

संस्कृतस्य संख्यावाचक शब्दानाम् अनादौ विद्यमाने असंयुक्त "द्" कारस्य स्थाने प्राकृते 'र्' कारः भवति। परन्तु आदौ विद्यमाने 'द्' कारस्यापि 'र्' कारः न भवति। यथा– दश दह, एवञ्च, 'चतुर्दशः' संख्यावाचक शब्दोऽपि 'द्' कार संयुक्तत्वात् अत्र 'द्' कारस्य 'र्' कारः न प्राप्तं, तस्मात् कारणात् "चउद्दह"।

**यथा–**

एकादश > एआरह

'एकादश' इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' कारस्य लोपे, एआदश इति प्राप्ते "संख्यायाञ्च" (प्रा. २.१४) इत्यनेन सूत्रेण 'द्' कारस्य 'र्' कारे, एआरश इति जाते "दशादिषु हः" (प्रा. २.४४) इत्यनेन सूत्रेण दशादिषु अष्टादशं पर्यन्तेषु 'श्' कारस्य 'ह्' कारे 'एआरह' इति रूपं सिद्धम्।

### द्वादशः > बारह

'द्वादश' इति स्थिते "उपरि लोपः कगडतदपषसाम्" (प्रा. ३.१) इत्यनेन सूत्रेण आदिभूतस्य 'द्' कारस्य लोपे बादश इति स्थिते, "संख्यायाञ्च" (प्रा. २.१४) इत्यनेन सूत्रेण 'द्' इत्यस्य 'र्' कारे बारश इति स्थिते, "दशादिषु हः" (प्रा. २.४४) इत्यनेन सूत्रेण 'श्' कारस्य 'ह्' कारे "बारह" इति रूपं सिद्धम्।

### त्रयोदश > तेरह

अस्य प्रक्रियां प्रथम परिच्छेदस्य "ए शय्यादिषु" (प्रा. १.५) इति सूत्रप्रसङ्गे द्रष्टव्यम्।

## १५. पो वः

**प्राकृतप्रकाशः**

पस्य लोपस्तथा वत्वं ज्ञेये लक्ष्याऽनुसारतः।
सुभगाया भवत्यत्र दुर्भगायश्च गस्य वः॥ १४॥

### सुबोधिनी

अयुक्तस्यानादिस्थितस्य पस्य वः स्यात्। कवालो कपालः। अनादाविति किम्? पई पतिः। अयुक्तस्येति किम्? विप्पो विप्रः। ननु रेफलोपे कृते यावद् द्वित्त्वं न भवति तावदेव वत्वं कथं न स्यादित्युच्यते कृताकृतप्रसिङ्गत्त्वाद् द्वित्वस्यैव प्रवृत्तेः।

### सञ्जीवनी

प इत्यक्षरं षष्ठ्यन्तम्। अयुक्तस्यानादौ स्थितस्य पकारस्य वकारादेशो भवति। कवालो उल्लावो कपालोल्लापयोः। कवोलो उवमा कपोलोपमयोः। अयुक्तस्येति किम्? विप्पो सप्पुरिसो। विप्रसत्पुरुषयोः। ननु रेफतकारयोर्लोपे कृते यावद् द्वित्वं न प्रवर्त्तते तावत् पस्य वत्वं कथं न स्यादित्युच्यते। कृताऽकृतप्रसङ्गित्वाद् द्वित्वस्यैव प्रवृत्तेः। अनादाविति किम्? पई पंडिओ पतिपण्डितयोः। पलोपं प्रति कगचादिसूत्र-स्याविषयविभागो लक्ष्यवशात्। 'सुभगाया भवत्यत्र दुर्भगायाश्च गस्य वः'। सूहवा सुभगा दूहवा दुर्भगा। 'ईदूताविदुतोः स्थाने स्यातां लक्ष्या-

नुरोधतः' इति ऊत्वम्। खधथादिना भस्य हः। दुहवेत्यत्र ऊदुत इत्यादिना ऊत्वम्॥ १४॥

**प्राकृतमञ्जरी**

**पकारस्य वकारः स्याच्छब्दे शब्दे विधानतः।**
**कपालं तत् कवालं स्यात् कोपः कोवो वपा ववा॥**
**ननु चोद्यते किं न्वेतत् प्रायो लोपविधौ पुनः।**
**पकारः पठितस्तेषां मध्यतः स्थांनिनामिति॥**
**उच्यते बहुलत्वेन पस्य वत्वं न दूषणम्।**
**प्रायोलोपश्च्च दृश्येत वापी वाई कपिः कई॥**

**मनोरमा**

पकारस्यायुक्तस्यानादिवर्त्तिने वकारादेशो भवति। सावो। सवहो। उलवो। शापः। शपथः। उलपः। प्रायोग्रहणाद्यत्र लोपो न भवति तत्रायं विधिः॥

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य" तथा "अनादौ", पदद्वयमनुवर्त्तते। परन्तु सूत्रमिदं "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इति लोप सूत्रस्य अपवाद सूत्रम्।

**सूत्रार्थः**

संस्कृत शब्दानामयुक्तानामनादौ विद्यमाने "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इति सूत्रेण अलुप्त 'प्' कारस्य स्थाने 'व्' कारः भवति।

यथा–

**शापः > सावो**

"शापः" इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे "साप" इति स्थिते, "पोवः" (प्रा. २.१५) इत्यनेन सूत्रेण 'प्' कारस्य 'व्' कारे "साव" इति जाते, "अत

ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने 'सु' इत्यस्य "ओत्वे", "सावो" इति रूपं सिद्धम्।

**शपथः > सवहो**

"शपथः" इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण "श्" कारस्य "स्" कारे "सपथ" इति स्थिते, "पोवः" (प्रा. २. १५) इत्यनेन सूत्रेण "प्" कारस्य "व्" कारे "सवथ" इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण "थ्" कारस्य 'ह्' कारे "सवह" इति जाते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे', "सवहो" इति रूपं सिद्धम्।

**उलपः > उलवो**

"उलपः" इति स्थिते "पोवः" (प्रा. २.१५) इत्यनेन सूत्रेण 'प्' कारस्य 'व्' कारे "उलव" इति जाते, "अत ओत् सोः" (प्रा. ५. १) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य ओत्वे "उलवो" इति रूपं सिद्धम्।

## १६. आपीड़े मः

### सुबोधिनी

अत्र मः स्यात्। आमेलो॥ १५॥

### सञ्जीवनी

प इत्यनुवर्तते। आपीडशब्दे पस्य मत्वं स्यात्। वत्वं प्राप्तम्। आमेलो आपीडः। एन्नीडापीडेत्यादिना ईकारस्य एत्त्वम्॥ डस्य चेति डस्य लः॥ १५॥

### प्राकृतमञ्जरी

आपीडे वर्तमानस्य पूर्वसूत्रापवादतः।
पस्य स्यान्मत्वमापीडमामेलं वाग्विदो विदुः॥ १६॥

### मनोरमा

आपीड़शब्दे पकारस्य मकारो भवति। आमेलो।

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अनादौ" तथा पोवः (प्रा. २.१६) इत्यतः 'पः' इति पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

संस्कृत आपीड़ शब्दस्य अनादौ विद्यमाने 'प्' कारस्य स्थाने प्राकृते 'म्' कारः भवति।

**यथा–**

**आपीड़ः > आमेलो**

"आपीड़" इति स्थिते "आपीड़े मः" (प्रा. २.१६) इत्यनेन सूत्रेण 'प्' कारस्य 'ड़' कारे "आमीड़" इति जाते, "एन्नीड़ापीड़कीदृशी दृशेषु" (प्रा. १.१९) इत्यनेन सूत्रेण 'ई' कारस्य 'ए' कारे, "आमेड़" इति जाते "डस्य च" (प्रा. २.२३) इत्यनेन सूत्रेण 'ड्' कारस्य 'ल्' कारे "आमेल" इति जाते, "अत ओत् सोः" इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे", 'आमेलो' रूपं सिद्धम्।

## १७. उत्तरीयानीययोर् (यो) ज्जो वा

**सुबोधिनी**

उत्तरीयशब्दस्यानीयस्य च सम्बन्धी यो यकारस्तस्य ज्ज इत्यादिश्यते। उत्तरिज्जं रमणिज्जं उत्तरीअं रमणीअं॥ १६॥

**सञ्जीवनी**

य इत्यक्षरं षष्ठ्यन्तम्। उत्तरीयशब्दे अनीयप्रत्यये च यकारस्य द्वित्वापन्नो ज इत्यादेशो भवति वा। उत्तरिज्जं उत्तरीअं उत्तरीयम्। यत्र पक्षे ज इत्यादेशः तत्र इदीतः पानीयादिषु इति इत्त्वम्। रमणिज्जं रमणीअं रमणीयम्। करणिज्जं करणीअं करणीयम्। ननु शेषादेशयोर्द्वित्वमनादाविति द्वित्वे सिद्धे किमर्थो द्विजकारक आदेशः? असदेतत्, तत्र युक्तस्येत्य-धिकाराद् युक्तवर्णादेशानां तत्र विधिः। अत्र तु युक्तानां वर्णानामादेश इति कथमेषां द्वित्वं स्यात्॥ १६॥

**प्राकृतमञ्जरी**

> **उत्तरीयपदे यस्य जकारः स्याद् द्विरुक्तिमान्।**
> **अनीयप्रत्यये चैवं विकल्पेन विधीयते॥**
> **उत्तरीयं विदुः प्राज्ञा उत्तरिज्जं यथा तथा।**
> **करणीयमिति प्राहुः करणिज्जं पुरेव वा॥१७॥**

**मनोरमा**

उत्तरीय शब्देडनीयप्रत्ययान्ते च यस्य ज्जो भवति वा। उत्तरीअं; उत्तरिज्जं; अमणीअं, रमणिज्जं। भरणीअं, भरणिज्जं।

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१७) इत्यतः "अनादौ" पदमनुवर्त्तते।

**सूत्रार्थः**

संस्कृत उत्तरीय तथा अनीय (अनीयर) प्रत्ययान्त शब्दानामनादौ विद्यमाने "य्" कारस्य स्थाने प्राकृते विकल्पेन "ज्ज्" कारादेशः भवति।

**यथा–**

उत्तरीयम् > उत्तरीअं

'उत्तरीयम्' इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'य्' कारस्य लोपे, "उत्तरीअ" इति स्थिते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "उत्तरीअं" इति रूपं सिद्धम्।

उत्तरीयम् > उत्तरिज्जं

'उत्तरीयम्' इति स्थिते "उत्तरीयानीययोर (यो) ज्जो वा" (प्रा. २.१७) इत्यनेन सूत्रेण अनादौ विद्यमाने 'य्' कारस्य विकल्पेन "ज्ज्" कारे, "उत्तरीज्ज" इति स्थिते "इदीतः पानीयादिषु" (प्रा. १.१८) इत्यनेन सूत्रेण दीर्घ "ई" कारस्य ह्रस्व 'इ' कारे, "उत्तरिज्ज" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "उत्तरिज्जं" रूपं सिद्धम्।

**रमणीयम् > रमणीअं**

"रमणीयम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'य्' कारस्य लोपे, "रमणीअ" इति जाते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके "सु" इत्यस्य बिन्दुत्वे (अनुस्वारे) "रमणीअं" रूपं सिद्धम्।

**रमणीयम् > रमणिज्जं**

'रमणीयम्' इति स्थिते "उत्तरीयानीययोर (यो) ज्जो वा" (प्रा. २.१७) इत्यनेन सूत्रेण अनादौ विद्यमाने 'य्' कारस्य विकल्पेन 'ज्ज्' कारे, "रमणीज्ज" इति जाते "इदीत पानीयादिषु" (प्रा. १.१८) इत्यनेन सूत्रेण दीर्घ "ई" कारस्य ह्रस्व 'इ' कारे, "रमणिज्ज" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "रमणिज्जं" रूपं सिद्धम्।

**समन्वयः**

मनोरमाकाराभिमतं सूत्रपाठे "यः" कारः नास्ति। परन्तु 'यः' इत्यस्य आवश्यकतां वर्त्तते। अन्यथा "आपीड़े मः" (प्रा. २.१६) इति पूर्ववर्ती सूत्रतः "पः" इति पदस्य अनुवृत्तिः अनिवार्यम्। "चन्द्रिका" आदि व्याख्यायाम् 'यः' कारस्य स्थिति युक्तंतथाऽत्रेवग्रहणीयम्।

## १८. छायायां हः

## सुबोधिनी

अत्र यस्य हः स्याद् वा। छाही छाहा छाआ। आतपाऽभाव इति वक्तव्यम्। तेन कणअछाअमित्यादौ कांतिवाचित्वाद् न भवति॥ १७॥

## सञ्जीवनी

य इत्यनुवर्तते। वेति च। छायाशब्दे यकारस्य हकारादेशः स्याद् वा। छाही छाहा छाआ छायैव। हत्वपक्षे एकत्र आदीतो बहुलमिति ईप्रत्ययः। आतपाभाव इति वक्तव्यम्। तेन कणअछाअं अगं। पउमछाअं मुहं इत्यादौ न भवति॥ १७॥

**मनोरमा**

छायाशब्दे 'य' कारस्य हकारो भवति। छाहा।

**अम्बिका**

"अयुक्तस्यानादौ' (प्रा. २.१) इत्यतः "अनादौ" तथा "उत्तरीयानीययोर (यो) ज्जो वा" (प्रा. २.१७) इत्यतः 'यः' पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

संस्कृतस्य 'छाया' शब्दस्य अनादौ विद्यमाने "य" कारस्यस्थाने प्राकृते 'ह' कारादेशः भवति।

**यथा–**

छाया > छाहा

'छाया' इति स्थिते "छायायां हः" (प्रा. २.१८) इत्यनेन सूत्रेण अनादौ विद्यमाने 'य्' कारस्य 'ह्' कारे "छाहा" इति रूपं सिद्धम्।

**समन्वयः**

कतिपय विदुषां मतैः सूत्रे 'वा' पदस्य (विकल्पार्थम्) अनुवृत्तिरपि वर्त्तते। अतः विकल्पपक्षे "य्" कारस्य "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण लोपे "छाआ" इति रूपमपि प्राकृते उपलभ्यते।

**१९. कबन्धे बो मः**

**प्राकृतमञ्जरी**

कबन्धे वर्त्तमानस्य हलो यत्वमिहेष्यते।

अधिकाराद् बकारस्य कयन्धं तं विदुर्बुधाः॥

**मनोरमा**

कबन्ध शब्दे बकारस्य 'म' कारो भवति। कमंधो।

**अम्बिका**

"अयुक्तस्य अनादौ" (प्रा. २.१) इत्यतः "अनादौ" पदमनुवर्त्तते।

**सूत्रार्थः**

संस्कृत "कबन्ध" शब्दस्य अनादौ विद्यमाने "ब्" कारस्य स्थाने प्राकृते "म्" कारादेशः भवति।

**यथा**

**कबन्धः > कमंधो, कयंधो**

"कबन्धः" इति स्थिते "कबन्धे बो मः" (प्रा. २.१९) इत्यनेन 'ब्' कारस्य "म्" कारे, "कमन्ध" इति जाते "नञोर्हलि" (प्रा. ४.१४) इत्यनेन सूत्रेण 'न्' कारस्य हलिपरे बिन्दुत्वे (अनुस्वारे), "कमंध" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "कमंधो" इति रूपं सिद्धम्।

**समन्वयः**

"कमंध" (मस्तकहीन शरीरम्) शब्दः पुंलिङ्गे तथा नपुंसकलिङ्गे व्यवह्रियते। "कमंध" शब्दस्य पर्य्यायवाची "कयंध"। अस्य सूत्रस्य सुबोधिनीसञ्जीवनीटिका नोपलभ्यते। आ. बलदेव उपाध्यायेन सम्पादित पुस्तके मनोरमा टिकायाम "कबन्धे बो यः" इति प्राप्यते। प्राकृत शब्दमहार्णवे "कयंध" (पृष्ठा २२६) "कमंध" (पृ. २२३) उभयंप्राप्तम्। तस्मात् सूत्रे 'म्' तथा 'य्' उभयस्य सन्निवेशमावश्यकमिति स्वमतम्।

**२०. टो डः**

**सुबोधिनी**

अयुक्तस्यानादिस्थितस्य टस्य डः स्यात्। फुडं। अयुक्तस्येति किम्? घण्टा। अनादाविति किम्? टंकारो॥१८॥

**सञ्जीवनी**

ट इत्यक्षरं षष्ठ्यन्तम्। अयुक्तस्य अनादौ स्थितस्य टस्य डकारादेशो भवति। रडिअं फुडं कुक्कुडो। रटितस्फुटकुक्कुटेषु। अयुक्तस्येति किम्? भट्टो घण्टा। अनादाविति किम्? टंकारो टङ्कारः। 'अदातो यथादिषु वा' इत्याकारस्य न अत्त्वम्॥१८॥

**प्राकृतमञ्जरी**

टकारस्य डकारः स्यात् सामान्येन पदे पदे।
खेटः खेडो कटुः कडू कूटः कूडो कटः कडो॥ २०॥

**मनोरमा**

टस्यानादिवर्तिनो ड कारो भवति। णडो। विड़वो॥ नटः। विटपः॥

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः अयुक्तस्य तथा "अनादौ" पदद्वयमनुवर्तते।

**सूत्रार्थः**

संस्कृत शब्दानाम् अनादौ विद्यमाने असंयुक्त 'ट्' कारस्य स्थाने प्राकृते "ड्" कारः भवति।

**यथा–**

**नटः > णडो**

'नटः' इति स्थिते "टोड़ः" (प्रा. २.२०) इत्यनेन सूत्रेण 'ट्' कारस्य 'ड्' कारे, "नड" इति प्राप्ते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे, "णड" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे', "णडो" इति रूपं सिद्धम्।

**विटपः > विड़वो**

"विटपः" इति स्थिते "टोड़ः" (प्रा. २.२०) इत्यनेन सूत्रेण 'ट्' कारस्य 'ड्' कारे, "विड़प" इति प्राप्ते "पो वः" (प्रा. २.२५) इत्यनेन सूत्रेण 'प्' कारस्य 'व्' कारे, "विड़व" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्तिएकवचने सु इत्यस्य ओत्वे "विड़वो" रूपं सिद्धम्।

**समन्वयः**

अन्यव्यञ्जनवर्णेन संयुक्त 'ट्' कारस्य 'ड्' कारः न भवति।

**यथा–**

**भट्टः > भट्टो**

'ट्ट' कारः यथावत् स्थिते अत्र केवलम् "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", 'भट्टो' रूपं सिद्धम्।

**२२. सटाशकटकैटभेषु ढः**

**सुबोधिनी**

एषु ढः स्यात्। डत्वापवादः। सढा सअढं केढवो॥१९॥

**सञ्जीवनी**

ट इत्यनुवर्तते उत्तरत्र च। एतेषु टस्य ढकारः स्यात्। डत्वस्यापवादः। सढाओ सटाः। 'जसो वा' इति ओत्वम्। सअढं शकटम्। 'शषोः सः' इति शस्य सः। केढवो कैटभः। 'ऐत एत्' इति एत्त्वम्। 'कैटभे वः' इति भस्य वः। 'अत ओत् सोः, इति ओत्त्वम्॥ १९॥

**प्राकृतमञ्जरी**

**टस्य ढत्वं सटायां स्याच्छकटे कैटभेऽपि च।**
**सढा च सअढो चैव तथा कइढवो मतः॥२१॥**

**मनोरमा**

एतेषु "ट" कारस्य "ढ" कारो भवति। सढा। सअढो। केढवो।

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः 'अनादौ' तथा "टोडः" (प्रा. २.२०) इत्यतः 'टः' इति पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

"सटा", "शकट" तथा "कैटभ" आदि संस्कृत शब्दानामनादौ विद्यमाने 'ट्' कारस्य स्थाने प्राकृते "ढ" कारादेशः भवति।

### सटा > सढा

"सटा" इति स्थिते "सटाशकटकैटभेषु ढः" (प्रा. २.२१) इत्यनेन सूत्रेण 'ट्' कारस्य 'ढ्' कारे "सढा" इति रूपं सिद्धम्।

### शकटः > सअढो

"शकट" इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण "श्" कारस्य "स्" कारे "सकट" इति जाते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' कारस्य लोपे 'सअट' इति स्थिते "सटाशकटकैटभेषु ढः" (प्रा. २.२१) इत्यनेन सूत्रेण 'ट्' कारस्य 'ढ्' कारे, "सअढ" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "सअढो" रूपं सिद्धम्।

### कैटभः > केढवो

"कैटभ" इति स्थिते "ऐत एत्" (प्रा. १.३५) इत्यनेन सूत्रेण आदि 'ऐ' कारस्य "ए" कारे "केटभ" इति स्थिते "सटाशकटकैटभेषु ढः" इत्यनेम सूत्रेण "ट्" कारस्य "ढ्" कारे "केढभ" इति स्थिते "कैटभे वः" (प्रा. २.२९) इत्यनेन सूत्रेण अनादि 'भ्' कारस्य 'व्' कारे "केढव" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य "ओत्वे", "केढवो" इति रूपं सिद्धम्।

## २२. स्फटिके लः

### सुबोधिनी

टस्य लः स्यात्। फलिहो॥२०॥

### सञ्जीवनी

स्फटिकशब्दे टस्य लादेशो भवति। फलिहो स्फटिकः। स्फटिकादिना कस्य हः

### प्राकृतमञ्जरी

स्फटिके टस्य लस्तस्मात् स्फटिको फलिहो मतः॥२२॥

**मनोरमा**

स्फटिक शब्दे 'ट' कारस्य लक़ारो भवति। फलिहो।

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अनादौ" तथा "टोडः" (प्रा. २.२०) इत्यतः "टः" पदद्वयमनुवर्त्तते।

**अम्बिका**

संस्कृत "स्फटिक" शब्दस्यानादौ विद्यमाने "ट्" कारस्य स्थाने प्राकृते 'ल्' कारः भवति।

**स्फटिकः > फलिहो**

अस्य शब्दस्य प्रक्रियां द्वितीय परिच्छेदे "स्फटिकनिकषचिकुरेषु कस्य हः" (प्रा. २.४) सूत्रप्रसङ्गे द्रष्टव्यम्।

**२३. डस्य च**

**सुबोधिनी**

डस्य च लः स्याद् अनादिस्थितस्यायुक्तस्य। तलाओ तडागः। अयुक्तस्येति किम्? उड्डीणो। अनादाविति किम्? डाइणी डाकिनी।

क्वचिद्वा डस्य लादेशः क्वचिद्वा नेष्यते बुधैः'। गुलो गुडो गुडः। दालिमं दाडिमं पीडिअं पीलिअं पीडितं। लउडो लगुडः। निविलो निविडः, इत्यादौ॥ २१॥

**सञ्जीवनी**

ल इत्यनुवर्तते। अयुक्तस्यानादौ स्थितस्य डस्य ल आदेशः स्यात्। तलाओ णिअलम् तडागनिगडयोः। कगचादिना गलोपः। सोलह षोडश। 'शषोः सः' इति षस्य सः। 'दशादिषु हः' इति शस्य हः। 'अन्त्यस्य हलः' इति नलोपः। 'जश्शसोर्लोपः' इति जसो लोपः। अयुक्तस्येति किम्? उड्डीणो मण्डवो उड्डीनमण्डपयोः। अनादाविति किम्? डाइणी डक्कारो डाकिनीडकारयोः। व्यवस्थितविभाषया क्वचिबा डस्य लादेशः। गुलो गुडो गुडः। दालिमं दाडिममेव। आपीलिअं आपीडिअं

व्यापीडितमित्यादिषु। क्वचिन्नैव लः। लउडो णिविडो लगुडनिविडयोः। इत्यादिषु॥ २१॥

**प्राकृतमञ्जरी**

डकरास्य लकार स्याद् वेति वक्तव्यमत्र तु।
दाडिमी दालिमी पक्षे दाडिमी तद्वदिष्यताम्॥

**मनोरमा**

डकारस्यायुक्तस्यानादिभतस्य लकारो भवति। दालिमं। तलाअं। वलही। प्रोयः इत्येवदाड़िमं। बड़िसं। णिबिडं। दाड़िमः। तड़ागः। वलभी। बड़िशं। निबिड़म्॥

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य" तथा "अनादौ" सूत्रस्य 'च' पदेन "स्फटिके लः" (प्रा. २.२२) इत्यतः 'ल्' एतानि – पदान्यनुवर्त्तन्ते।

**सूत्रार्थः**

संस्कृत शब्देषु अनादौ विद्यमाने असंयुक्त "ड्" कारस्य स्थाने प्राकृते "ल्" कारादेशः भवति।

**यथा–**

**दाड़िमम् > दालिमं**

"दाड़िमम्" इति स्थिते "डस्य च" (प्रा. २.२३) इत्यनेन सूत्रेण 'ड्' कारस्य 'ल्' कारे, "दालिमम्" इति जाते "मोर्बिन्दुः" (प्रा. ४.१२) इत्यनेन सूत्रेण 'म्' कारस्य बिन्दुत्वे (अनुस्वारे) "दालिमं" रूपं सिद्धम्।

**तड़ाकम् > तलाअं**

"तड़ाकम्" इति स्थिते "डस्य च" (प्रा. २.२३) इत्यनेन सूत्रेण 'ड्' कारस्य 'ल्' कारे, "तलाकम्" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण "क्" कारस्य लोपे "तलाअ" इति स्थिते "मोर्बिन्दुः" (प्रा. ४.१२) इत्यनेन सूत्रेण "म्" कारस्य बिन्दुत्वे (अनुस्वारे) "तलाअं" इति रूपं सिद्धम्।

**षोड़श > सोलह**

'षोड़श' इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'ष्' कारस्य 'स्' कारे "सोड़श" इति जाते, "डस्य च" (प्रा. २.२३) इत्यनेन सूत्रेण 'ड्' कारस्य 'ल्' कारे "सोलश" इति जाते, "दशादिषु हः" (प्रा. २.४४) इत्यनेन सूत्रेण 'श्' कारस्य 'ह्' कारे "सोलह" इति रूपं सिद्धम्।

**समन्वयः**

संयुक्तः 'ड' कारः 'ल्' कारे न परिवर्त्तते।

**यथा–**

**उड्डीनः > उड्डीणो**

"कगचजतदपयवां प्रायो लोपः (प्रा. २.२) इत्यतः "प्राय" पदस्य अनुवृत्तित्वात् कतिचित्स्थाने 'ड्' इत्यस्य 'ल्' कारः न भवति।

**यथा–**

**निबिड़म् > णिविडं।**

"निविड़म्" इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे, "ड्" इत्यस्य 'ल्' कारे अपरिवर्त्तितत्वात् "णिविड" इति जाते, "मोर्बिन्दुः" (प्रा. ४.१२) इत्यनेन सूत्रेण 'म्' इत्यस्य बिन्दुत्वे "णिविडं" रूपं सिद्धम्।

## २४. ठो ढः

### सुबोधिनी

अयुक्तस्याऽनादौ स्थितस्य ठस्य ढः स्यात्। कढिणो कठिनः। अयुक्तस्येति किम्? कण्ठो। अनादाविति किम्? ठक्कुरो॥२२॥

### सञ्जीवनी

ठ इत्यक्षरं षष्ठचन्तम्। अयुक्तस्यानादौ स्थितस्य ठकारस्य ढकारादेशः स्यात्। पढिअं कढिणो पठितकठिनयोः। लुढिओ कमढो लुठितकमठयोः। अयुक्तस्येति किम्? कण्ठो णिट्ठो। अनादाविति किम्? ठक्कुरो ठआरो॥२२॥

**प्राकृतमञ्जरी**

**ठकारस्य ढकारः स्यादुत्सर्गेण पदे पदे।**
**पीठी पीढी मता माठी माढी तद्वन्मठो मढो॥२४॥**

**मनोरमा**

ठकारस्यायुक्तस्यानादि भूतस्य ढकारो भवति। मढो। जढरं। कढोरं॥ मठः। जठरम्। कठोरम्॥

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य" तथा "अनादौ" पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

संस्कृतशब्देषु अनादौ विद्यमाने असंयुक्त "ठ्" कारस्य स्थाने प्राकृते 'ढ्' कारः भवति।

**यथा—**

**मठः > मढो**

'मठः' इति स्थिते "ठो ढः" (प्रा. २.२४) इत्यनेन सूत्रेण 'ठ्' कारस्य 'ढ्' कारे, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे', "मढो" रूपं सिद्धम्।

**कठोरम् > कढोरं**

'कठोरम्' इति स्थिते "ठोढः" (प्रा. २.२४) इत्यनेन सूत्रेण "ठ्" कारस्य "ढ्" कारे, "मोर्बिन्दुः" (प्रा. ४.१२) इत्यनेन सूत्रेण 'म्' इत्यस्य "बिन्दुत्वे" (अनुस्वारे) "कढोरं" रूपं सिद्धम्।

**जठरम् > जढरं**

'जठरम्' इति स्थिते "ठोढः" (प्रा. २.२४) इत्यनेन सूत्रेण 'ठ्' कारस्य 'ढ्' कारे, "मोर्बिन्दुः" (प्रा. ४.१२) इत्यनेन सूत्रेण 'म्' इत्यस्य "बिन्दुत्वे" (अनुस्वारे) "जढरं" रूपं सिद्धम्।

**समन्वयः**

अन्यव्यंजनवर्णेन सह संयुक्त 'ठ्' इत्यस्य 'ढ्' कारः न भवति।

**यथा–**

**कण्ठः > कंठो**

"कण्ठ" इति स्थिते "ययि तदवर्गान्तः" (प्रा. ४.१७) इत्यनेन सूत्रेण विकल्पेन 'ण्' इत्यस्य अनुस्वारे, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "कंठो" इति रूपं सिद्धम्। अत्र 'ठ्' इत्यस्य 'ढ्' कारे न परिवर्त्तते।

**२५. अङ्कोले (ठ) ल्लः**

**सुबोधिनी**

**अत्र ठस्य ल्लः स्यात्। अंकोल्लो॥२३॥**

**सञ्जीवनी**

अंकोठशब्दे ठस्य द्वित्वमापन्नो ल्ल आदेशः स्यात्। अंकोल्लो॥२३॥

**प्राकृतमञ्जरी**

**इतरेतरसंश्लिष्टलकारद्वितयं भवेत्।**
**ठस्यां कोठे तढं कोठमंकोल्लं तद्विदो विदुः॥ २५॥**

**मनोरमा**

अङ्कोलशब्दे लकारस्य लकारो भवति। अङ्कोल्लो।

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अनादौ" तथा "ठो ढः" इत्यतः (प्रा. २.२४) 'ठः' पदद्वयमनुवर्तते।

**सूत्रार्थः**

'अङ्कोठ' इति संस्कृत शब्दस्य अनादौ विद्यमाने "ठ्" कारस्य स्थाने प्राकृते "ल्ल्" कारः आदिश्यते।

यथा—

अङ्कोठः > अंकोल्लो

"अङ्कोठ" इति स्थिते "ययि तदवर्गान्तः" (प्रा. ४.१७) इत्यनेन सूत्रेण विकल्पेन 'ङ' इत्यस्य अनुस्वारे "अंकोठ" इति जाते "अङ्कोले (ठ) ल्लः" (प्रा. २.२५) इत्यनेन सूत्रेण 'ठ्' इत्यस्य स्थाने "ल्ल्" आदेशे, "अंकोल्ल" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "अंकोल्लो" रूपं सिद्धम्।

'चन्द्रिका' आदि व्याख्यायाम् "अङ्कोठे" इति उपलब्धम्।

**२६. फोभः**

**प्राकृतमञ्जरी**

> **फकारस्य भकारत्वं प्रायेणात्र पदे पदे।**
> **शेफाली तेन सेभाली रेफो रेभो कफः कभो॥**

**मनोरमा**

फकरस्यायुक्तस्यानादिभूतस्य भकारो भवति। सिभा। सेभालिआ। सभरी। संभलं।

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य", तथा "अनादौ" पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

संस्कृतशब्देषु अनादौ विद्यमाने असंयुक्त 'फ्' कारस्य स्थाने (प्राकृते) 'भ्' कारादेशः भवति।

यथा—

शिफा > सिभा

शिफा इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे, "सिफा" इति जाते "फोभः" (प्रा. २.२६)

इत्यनेन सूत्रेण 'फ्' कारस्य 'भ्' कारे "सिभा" इति रूपं जातम्।

### शेफालिका > सेभालिआ

"शेफालिका" इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे, "सेफालिका" इति जाते "फोभः" (प्रा. २.२६) इत्यनेन सूत्रेण 'फ्' कारस्य 'भ्' कारे "सेभालिका" इति प्राप्ते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' कारस्य लोपे "सेभालिआ" इति रूपं सिद्धम्।

### शफरी > सभरी

'शफरी' इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' कारस्य 'स्' कारे, "सफरी" इति जाते "फोभः" इत्यनेन सूत्रेण 'फ्' इत्यस्य 'भ्' कारे "सभरी" इति रूपं सिद्धम्।

**२७. खघथधभां हः**

## सुबोधिनी

एषामनुक्तानामनादिस्थितानां हः स्यात्। मेहला मेखला। मेहो मेघः पहिओ पथिकः अहरो अधरः सेहालिआ शेफालिका वल्लहो वल्लभः। अयुक्तस्येति किम्? सङ्खो णिग्घोसो इत्यादि। अनादौ किम्? खलो घणो इत्यादि।

'न हत्वं खघथादीनां परेषां बिंदुतो भवेत्'। संखो लंघनमित्यादौ।

'प्रायःशब्दानुवृत्त्याऽपि हत्वाऽभावः क्वचिद्भवेत्'। अखण्डो णवघणो अधमो बहुफलो अभओ 'ककुदे तु दकारस्य हकारः परिदृश्यते' कउहं ॥२४॥

## सञ्जीवनी

एषां खादीनाम् अयुक्तनामनादौ स्थितानों हादेशः स्यात्। खस्य तावत्-मुहला मेहला मुखरामेखलयोः। घस्य-अमोहो मेहो अमोघमेघयोः। थस्य–पहिओ महिओ पथिकमथिकयोः। घस्य–अहरो बहिरो अधर-बधिरयोः। फस्य-सुहला सेहालिआ सुफलासेफालिकयोः। भस्य-वल्लहो करहो वल्लभकरभयोः। अयुक्तस्येति किम्? सङ्खो णिग्घोसो पत्थरो

बन्धणो णिप्फलो णिब्भरो। अनादाविति किम्? खलो घणो थिरो धीरो फणा भीसणो।

'न हत्वं खघथादीनां परेषां बिन्दुतो भवेत्'। संखो लंघणं मंथरा बंधुरो किंफलो कुंभो। क्वचित् तद्वर्गान्त इति तद्वर्गादन्यत्रायं निषेधः। तद्वर्गान्ते तु अयुक्तस्येति तत्राधिकारात् हत्वाभावः। 'प्रायःशब्दानुवृत्त्यापि हत्वाभावः क्वचिद् भवेत्। अखंडो णिग्घणो थिरो अधमो बहुफलो अभजो इत्यादयः। 'ककुदे तु दकारस्य हकारादेश इष्यते'। कउहं॥२४॥

## प्राकृतमञ्जरी

**खघथानां धकारस्य भकारस्यापि हो भवेत्।**
**मेखला विघसो नाथो विधिः शोभनमीदृशम्॥**
**मेहला विहसो णाहो विही सोहणमुच्यते॥**
**पखलो पलअघणो पाथेअं घणसभा क्रमेण पुनः।**
**पञ्चस्वेषु न हत्वं प्रायोवृत्तिप्रसङ्गेन॥२७॥**

## मनोरमा

खादीनां पञ्चानामयुक्तानामनादि वर्त्तिनाम् हकारो भवति। खस्य तावत्-मुहं। मेहला। घस्य-मेहो। जहण। थस्य-गाहा। सवहो। धस्य-राहा, बहिरो। भस्य-सहा, रासहो। प्राय इत्येव-पखलो। पलंघणो। अधीरो। अधणो। उपलद्धभावो॥ मुखम्, मेखला, मेघः, जघनम्, गाथा, शपथः, राधा, बधिरः, सभा, रासभः, प्रखल, प्रलङ्घनः, अधीरः, अधनः, उपलब्धभावः॥

## अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य" तथा "अनादौ" पदद्वयमनुवर्त्तते।

## सूत्रार्थः

संस्कृतशब्देषु अनादौविद्यमानेषु असंयुक्त 'ख्', 'घ्', 'थ्', 'ध्', तथा 'भ्' ध्वनिनां स्थानेषु प्राकृते प्रायतः 'ह्' कारः भवति।

**यथा–**

**ख > ह = मुखम् > मुहं**

'मुखम्' इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'ख्' इत्यस्य 'ह्' कारे "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) 'मुहं' इति रूपं सिद्धम्।

**मेखला > मेहला**

'मेखला' इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'ख्' इत्यस्य "ह्" कारे "मेहला" इति रूपं सिद्धम्।

**घ > ह = मेघः > मेहो**

'मेघः' इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'घ्' इत्यस्य 'ह्' कारे, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य "ओत्वे", "मेहो" इति रूपं सिद्धम्।

**जघनम् > जहणं**

"जघनम्" इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'घ्' इत्यस्य 'ह्' कारे, "जहनम्" इति जाते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे, "जहणम्" इति प्राप्ते "सोर्बिन्दुनपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "जहणं" इति रूपं सिद्धम्।

**थ > ह = गाथा > गाहा**

"गाथा" इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'थ्' इत्यस्य 'ह्' कारे गाहा इति रूपं सिद्धम्।

**शपथः > सवहो**

अस्य प्रक्रियां अस्मिन् परिच्छेदे "पोवः" (प्रा. २.१५) सूत्रप्रसङ्गे द्रष्टव्यम्।

**ध > ह = राधा > राहा**

'राधा' इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण

'ध्' कारस्य 'ह्' कारे "राहा" इति रूपं सिद्धम्।

बधिरः > बहिरो

"बधिरः" इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'ध्' इत्यस्य 'ह्' कारे, "बहिर" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण "अदन्तस्य प्रथमाविभक्तिएकवचने 'सु' इत्यस्य ओत्वे "बहिरो" इति रूपं सिद्धम्।

भ > ह = रासभः > रासहो

"रासभः" इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण "भ्" इत्यस्य "ह्" कारे, "रासह" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण "अदन्तस्य प्रथमाविभक्तिएकवचने 'सु' इत्यस्य "ओत्वे" "रासहो" इति रूपं सिद्धम्।

सभा > सहा

"सभा" इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'भ्' इत्यस्य 'ह्' कारे "सहा" रूपं सिद्धम्।

**समन्वयः**

प्रस्तुत सूत्रे "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यतः "प्रायः" पदस्यानुवृत्तिर्भवति। अतः कतिपयशब्देष्वोपरोक्तध्वनिनां 'ह' कारः न भवति।

**यथा—**

प्रखलः > पखलो

"प्रखलः" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' इत्यस्य लोपे "पखल" इति जाते "अत ओत् सोः" (प्रा. ५. १) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे' 'पखलो' रूपं सिद्धम्। अत्र 'ख्' इत्यस्य न 'ह्' कारः।

अधीरः > अधीरो

"अधीरः" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्तिएकवचने 'सु' इत्यस्य 'ओ' कारे, 'ध्' कारस्य

"प्रायः" इति पदेन 'ह्' कारे अपरिवर्त्तितत्वात् "अधीरो" रूपं सिद्धम्।

**अभयः > अभओ**

'अभयः' इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'य्' इत्यस्य लोपे "अत ओत् सोः" (प्रा. ५.१) इत्यनेन अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओ' कारे 'अभओ' रूपं सिद्धम्।

अपिच, व्यञ्जनवर्णेनसंयुक्तेन खघथधभ इति ध्वनिनां न तु 'ह' कारः भवति।

**यथा–**

**निर्घोषः > णिग्घोसो**

'निर्घोष' इति स्थिते "नो णः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे, "णिर्घोष" इति जाते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' इत्यस्य लोपे, "णिघोष" इति प्राप्ते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'घ्' इत्यस्य द्वित्वे, "णिघ्घोष" इति स्थिते "वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इत्यनेन सूत्रेण 'घ्' कारस्य 'ग्' कारे, "णिग्घोष" इति प्राप्ते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण "ष्" कारस्य 'स्' कारे, "णिग्घोस" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति "एकवचने" 'सु' इत्यस्य "ओ" कारे "णिग्घोसो" इति रूपं सिद्धम्।

**निर्भरः > णिब्भरो**

"निर्भरः" इति स्थिते "नो णः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे, "णिर्भर" इति जाते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे, "णिभर" इति प्राप्ते "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'भ्' कारस्य द्वित्वे, "णिभ्भर" इति प्राप्ते "वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इत्यनेन 'भ्' कारस्य 'ब्' कारे, "णिब्भर" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्तिएकवचने 'सु' इत्यस्य

ओत्वे "णिब्भरो" इति रूपं सिद्धम्।

एतयोः द्वयोः उदाहरणयोः 'घ्' तथा 'भ्' संयुक्तत्वात् 'ह्' कारेण न परिवर्त्तते।

## २८. प्रथमशिथिलनिषधेषु ढः

### सुबोधिनी

एषु थघयोर्ढः स्यात्। पढमो सिढिलो निसढो॥२५॥

### सञ्जीवनी

एषां थकारस्य धस्य च ढादेशः स्यात्। पढमो। प्रथमः सिढिलो निसढो शिथिलनिषधयोः 'शषोः सः' इति सः॥२५॥

### प्राकृतमञ्जरी

**प्रथमे शिथिले चैव निषधेऽपि च ढो भवेत्।**
**थधयोः पढमं तेन सिढिलो णिसढो क्रमात्॥**

### मनोरमा

एतेषु थधयोर्ढकारो भवति। पढमो सिढिलो। णिसढो।

### अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.२८) इत्यतः "अनादौ" तथा "खघथधभां हः" (प्रा. २.२७) इत्यतः 'थ्' तथा 'ध्' कारौ अनुवर्त्तते।

### सूत्रार्थः

प्रथमः, शिथिलः, तथा निषधः इति संस्कृत शब्दानामनादौ विद्यमाने 'थ्' कारस्य तथा 'ध्' कारस्य स्थाने प्राकृते "ढ्" कारः आदिश्यते।

**यथा–**

**प्रथमः > पढमो**

"प्रथमः" इति स्थिते "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'र्' कारस्य लोपे, "पथम" इति स्थिते "प्रथमशिथिलनिषधेषु ढः" (प्रा. २.२८) इत्यनेन सूत्रेण 'थ्' कारस्य 'ढ' कारे, "पढम" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य

प्रथमाविभक्तिएकवचने "सु" इत्यस्य "ओ" कारे 'पढमो' रूपं सिद्धम्।

शिथिलः > सिढिलो

"शिथिलः" इति स्थिते "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' इत्यस्य 'स्' कारे, "सिथिल" इति जाते "प्रथमशिथिल-निषधेषु ढः" (प्रा. २.२८) इत्यनेन सूत्रेण 'थ्' इत्यस्य 'ढ्' कारे "सिढिल" इति जाते "अत ओत् सोः" इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने 'सु' इत्यस्य 'ओ' कारे "सिढिलो" रूपं सिद्धम्।

निषधः > णिसढो

"निषधः" इति स्थिते 'न्' इत्यस्य 'ण्' कारे, "नो णः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण, "शषोःसः" (प्रा. २.४३) इति सूत्रेण 'ष्' कारस्य 'स्' कारे, "णिसध" इति जाते "प्रथमशिथिलनिषधेषु ढः" (प्रा. २.२८) इत्यनेन 'ध्' इत्यस्य 'ढ्' कारे, "णिसढ" इति प्राप्ते "अत ओत् सोः" इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्तिएकवचने "सु" इत्यस्य "ओ" कारे, "णिसढो" रूपं सिद्धम्।

**२९. कैटभे वः**

सुबोधिनी

अत्र भस्य वः स्यात्। केढवो॥ २६॥

सञ्जीवनी

कैटभशब्दे भस्य वादेशः स्यात्। हत्वस्य बाधकः। केढवो सटाशकटादिना टस्य ढः। 'ऐत एत्' इति एत्त्वम्॥ २६॥

प्राकृतमञ्जरी

कैटभे तु भकारस्य वकारादेश इष्यते।
ततः कैटभ इत्येष वाच्यः कइढवो बुधैः॥

मनोरमा

कैटभशब्दे 'भ' कारस्य 'व' कारो भवति। केढवो।

अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.२९) इत्यतः "अनादौ" तथा "खघथधभां हः" (प्रा. २.२७) इत्यतः "भ्" इति पदद्वयमनुवर्त्तते। "खघथधभां हः" (प्रा. २.१७) इति सूत्रस्य 'भ' कारस्य स्थाने 'ह' कारस्य बाधकसूत्रमेव सूत्रमिदम्।

सूत्रार्थः

"कैटभ" शब्दस्य अनादौ विद्यमाने "भ्" कारस्य स्थाने प्राकृते "व्" कारादेशः भवति।

**कैटभः > केढवो**

अस्य प्रक्रियां तु "सटाशकटकैटभेषु ढः" (प्रा. २.२१) सूत्रप्रसङ्गे द्रष्टव्यम्।

**३०. हरिद्रादीनां रोलः**

सुबोधिनी

एषां रस्य लः स्यात्।

**हरिद्रामुखराङ्गारसुकुमारयुधिष्ठिरान्।**

**किरातपरिघौ चैव हरिद्रादीन् प्रचक्षते॥**

हलिद्दा मुहलो इंगालो सोमालो जुहिट्ठिलो किलाओ फलिहो। अनादावित्यधिकारो निवृत्तः॥ २७॥

सञ्जीवनी

र इत्यक्षरं षष्ठ्यन्तम्। हरिद्रासदृशेषु शब्देषु रेफस्य लादेशः स्यात्। हलद्दी हरिद्रा। अत् पथिहरिद्रापृथिवीष्विति इकारस्य अत्त्वम्। द्रे रो वा इति रलोपः। शेषादिना दस्य द्वित्वम्। अन्त्यस्य हल इति सुलोपः। मुहलो मुखरः। खघथादिना खस्य हः। इंगालो अङ्गारः। इदीषदित्यादिना अकारस्य इत्त्वम्। सोमालो सुकुमारः। उत ओत् तुण्डरूपेषु इति अतः ओत्त्वम्। कगचादिना कलोपः। सन्धावचामित्यादिना उलोपः। जुहिट्ठिलो युधिष्ठिरः। आदर्यो जः इति जः। खधथादिना धस्य हत्वम्। उपरि लोपः इत्यादिना पलोपः। चिलाओ किरातः। 'किराते च' इति कस्य चः।

कगचादिना तलोपः। फलिहो परिधः। पुरुषपरिधादिना पस्य फः। खघथादिना खस्य हः।

हरिद्रामुखराङ्गारसुकुमारयुधिष्ठिराः।

किरातपरिघौ चैवं हरिद्रादीन् प्रकल्पयेत्॥२७॥

**प्राकृतमञ्जरी**

हरिद्रादिपदानां यो रेफस्तस्य लकारता।

हरिद्रा तु हलद्दा स्यात् करुणा कलुणा मता॥

हरिद्रा - करुणाङ्गार - सुकुमार - युधिष्ठिराः।

कारणं चरणं चैव परिघः परिखा तथा॥३०॥

**मनोरमा**

हरिद्रा इत्येवमादीनां रेफस्य लकारो भवति। हलद्धा। चलणो। मुहलो। जहिट्ठिलो। सोमालो। कलुणं। अंगुली। इङ्गालो। चिलादो। फलिहा। फलिहो॥ हरिद्रा-चरण-मुखर-युधिष्ठिर-सुकुमार-करुण-अंगुरी-अंगार-किरात-परिखा-परिध-इत्येवमादयः।

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः 'अयुक्तस्य' तथा अनादौ पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

हरिद्रा-चरण-मुखर-युधिष्ठिर-सुकुमार-करुण-अंगुरो-अंगार-किरात-परिखा-परिध एतेषु संस्कृत शब्देषु अनादौ विद्यमाने तथा असंयुक्त 'र्' ध्वनौ स्थाने प्राकृते "ल्" कारः भवति।

**यथा—**

हरिद्रा > हलद्दा

अस्य प्रक्रियां तु "अत् पथिहरिद्रा पृथिवीषु" (प्रा. २.१३) इति सूत्रप्रसङ्गे द्रष्टव्यम्।

### चरणः > चलणो

"चरणः" इति स्थिते "हरिद्रादीनां रोलः" (प्रा. २.३०) इत्यनेन सूत्रेण 'र्' इत्यस्य 'ल'त्वे "चलण" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्तिएकवचने 'सु' इत्यस्य "ओत्वे", "चलणो" इति रूपं सिद्धम्।

### मुखरः > मुहलो

'मुखरः' इति स्थिते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'ख्' इत्यस्य 'ह्' कारे "मुहर" इति स्थिते "हरिद्रादीनां रो लः" (प्रा. २.३०) इत्यनेन सूत्रेण 'र्' इत्यस्य 'ल्' कारे, "मुहलो" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्तिएकवचने "सु" इत्यस्य "ओत्वे", "मुहलो" रूपं सिद्धम्।

### युधिष्ठिरः > जहिट्ठिलो

अस्य प्रक्रियां "अन्मुकुटादिषु" (प्रा. १.२२) इति सूत्रप्रसङ्गे द्रष्टव्यम्।

### सुकुमारः > सोमालो

"सुकुमारः" इति स्थिते "अन्मुकुटादिषु" (प्रा. १.२२) इत्यनेन सूत्रेण "आदि 'उ' इत्यस्य 'अ' कारे, "सकुमार" इति स्थिते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' इत्यस्य लोपे "सउमार" इति जाते "आदि-अ" तथा 'उ' एतयोः गुणे "सोमार" इति स्थिते "हरिद्रादीनां रोलः" (प्रा. २.३०) इत्यनेन सूत्रेण 'र्' इत्यस्य 'ल्' कारे, "सोमाल" इति जाते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्तिएकवचने 'सु' इत्यत्य ओत्वे, "सोमालो" इति रूपं सिद्धम्।

### करुणम् >

'करुण' इति स्थिते, "हरिद्रादीनां
सूत्रेण 'र्' कारस्य 'ल्' कारे, "कलुण"
(प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु'
'कलुणं' रूपं सिद्धम्।

यनेन सूत्रेण

**अंगुरी > अंगुली**

'अंगुरी' इति स्थिते "हरिद्रादीनां रो लः" (प्रा. २.३०) इत्यनेन सूत्रेण 'र्' कारस्य 'ल्' कारे, "अंगुली" इति रूपं सिद्धम्।

**अंगारः > इङ्गालो**

अस्य प्रक्रियां "इदीषत्पक्वस्वप्नवेतसव्यजनमृदाङ्गाऽङ्गारेषु" (प्रा. १.३) सूत्रप्रसङ्गे द्रष्टव्यम्।

**किरातः > चिलादो**

अस्यप्रक्रियां "किराते च" (प्रा. २.३३) इति सूत्रप्रसङ्गे द्रष्टव्यम्।

**परिखा > फलिहा**

अस्यप्रक्रियां "पुरुषपरिधयपरिखासु फः" (प्रा. २.३६) इति सूत्र प्रसङ्गे द्रष्टव्यम्।

**परिधः > फलिहो**

अस्य प्रक्रियां "पुरुषपरिधपरिखा सु फ" (प्रा. २.३६) इति सूत्र प्रसङ्गे द्रष्टव्यम्।

**३१. आदेर्यो जः**

**सुबोधिनी**

पदादिस्थितस्य यस्य जः स्यात्। जुअई युवतिः। आदेरिति किम्? णअणं। 'प्रक्षिप्तपूर्वकस्यापि यस्य जादेश इष्यते'। गाढजोव्वणा॥ २८॥

**सञ्जीवनी**

य इत्यक्षरं षष्ठ्यन्तम्। आदिभूतस्य यकारस्य जादेशो भवति। जोव्वणं यौवनम्। औत ओत् इति ओत्त्वम्। 'नीडादिषु' इति वस्य द्वित्वम्। नो णः इति णः। जुअई युवतिः। कगचादिना तवयोर्लोपः। सुभिःसुप्सुदीर्घः इति दीर्घः। जामिनी यामिनी। आदेरिति किम्? अवअवो अवयवः। अअणं अयनम्। 'भूतपूर्वादिकस्यापि यस्य जादेश इष्यते'। जोव्वणा। बालजुअई बालयुवतिः। सजामिणी सयामिनी। संजमो गे संयमायोग्ययोः॥ २८॥

प्राकृतमञ्जरी

अनादाविति मुक्तं तदादेरिति पदे पदे।
अधिकारोऽयमा "नो णः सर्वत्र" इत्यमुतः पुरा॥
पदस्यादेर्यकारस्य जकारत्व विधीयते।
यज्ञो जणो भवेद् भूयो यात्रा जत्ता यमो जमो॥३२॥

मनोरमा

अनादिरिति निवृत्तम्। आदिभूतस्य "य्" कारस्य जकारो भवति। जठ्ठी। जसो। जक्खो॥ यष्टिः। यशः। यक्षः॥

अम्बिका

'"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः 'अयुक्तस्य" पदमनुवर्त्तते। सूत्रे "आदे" इति ग्रहणत्वात् "अनादौ" पदमप्यनुवर्त्तते।

सूत्रार्थः

संस्कृतशब्देषु आदिषु अनादिष्वपि विद्यमाने असंयुक्त "य्" इत्यस्यस्थाने प्राकृते 'ज्' कारः भवति।

यथा–

यौवनम् > जोव्वणं

"यौवनम्" शब्दस्य प्रक्रियां प्रथमपरिच्छेदस्य "औत ओत्" (प्रा. १.४१) सूत्रप्रसङ्गे द्रष्टव्यम्।

यशः > जसो

"यशः" इति स्थिते "आदेर्यो जः" (प्रा. २.३१) इत्यनेन सूत्रेण 'य्' कारस्य 'ज्' कारे, "जश" इति स्थिते "शषोः सः" (प्रा. २. ४३) इत्यनेन सूत्रेण 'श्' इत्यस्य 'स्' कारे, "जस" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओ' कारे, "जसो" रूपं सिद्धम्।

यक्षः > जक्खो

"यक्षः" इति स्थिते "आदेर्यो जः" (प्रा. १.३१) इत्यनेन सूत्रेण

'य्' इत्यस्य 'ज्' कारे, "जक्ष" इति जाते "ष्कस्कक्षां खः" (प्रा. ३.२९) इत्यनेन सूत्रेण 'क्ष्' इत्यस्य 'ख्' कारे, "जख" इति प्राप्ते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'ख्' कारस्य द्वित्वे, "जख्ख" इति जाते, "वर्गेषुयूजः पुर्वः" (प्रा. ३.५१) इत्यनेन सूत्रेण 'ख्' इत्यस्य "क्" कारे "जक्ख" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्तिएकवचने 'सु' इत्यस्य 'ओ' कारे "ज़क्खो" रूपं सिद्धम्।

**यमुना > जमुणा**

'यमुना' इति स्थिते "आदेर्यो जः" (प्रा. २.३१) इत्यनेन सूत्रेण आदि 'य्' इत्यस्य 'ज्' कारे, "जमुना" इति जाते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण "न्" इत्यस्य 'ण्' कारे, "जमुणा" इति रूपं सिद्धम्।

**३२. यष्टयां लः**

**सुबोधिनी**

अत्र यस्य लः स्यात्। लठ्ठी खग्गलठ्ठी॥२९॥

**सञ्जीवनी**

यष्टिशब्दे अकारस्य लादेशः स्यात्। लठ्ठी यष्टिः। ष्टस्य ठः इति ठः। तस्य द्वित्वे वर्गे युजः पूर्वः इति टः। सुभिःसुप्सु दीर्घः इति दीर्घः। अन्त्यस्य हलः इति सुलोपः। तदन्तोऽपि खग्गलठ्ठी महुलठ्ठी खड्गयष्टिमधुयष्ट्योः॥२९॥

प्राकृतमञ्जरी

यष्ठिशब्दे भवेदादेर्यकारस्य लकारता।

यष्टिस्तेन भवेल्लट्ठी पूर्वसूत्रापवादतः॥३२॥

मनोरमा

यष्टिशब्दे 'य्' कारस्य 'ल्' कारो भवति। लट्ठी।

अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य" तथा "आदेर्योजः" (प्रा. २.३१) इत्यतः "आदेः" पदद्वयमनुवर्त्तते।

सूत्रार्थः

संस्कृतस्य यष्टि शब्दस्य आदौ विद्यमाने असंयुक्त "य्" कारस्य स्थाने प्राकृते 'ल' कारः भवति।

यथा–

यष्टिः > लट्ठी

"यष्टिः" इति स्थिते "यष्टयां लः" (प्रा. २.३२) इत्यनेन सूत्रेण 'य्' इत्यस्य 'ल्' कारे, "लष्टि" इति स्थिते "ष्टस्य ठः" (प्रा. ३.१०) इत्यनेन सूत्रेण ष्टस्य ठ्' कारे, "लठि" इति जाते "शेषादेशर्योर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'ठ्' इत्यस्य द्वित्वे, "लठ्ठि" इति प्राप्ते "वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इत्यनेन सूत्रेण 'ठ्' इत्यस्य 'ट्' कारे, "लट्ठि" इति जाते, "सुभिस्सुप्सु दीर्घ" (प्रा. ५.१८) इत्यनेन सूत्रेण इदन्तस्य दीर्घत्वे "लट्ठी" इति रूपं सिद्धम्।

३३. किराते चः

सुबोधिनी

अत्रादिवर्णस्य चः स्यात्। चिलाओ।

'म्लेच्छे वाच्ये लचादेशौ न हरे कामरूपिणि'। हरकिराओ॥३०॥

सञ्जीवनी

आदेरित्यनुवर्तते नो णः इत्यतः प्राक्। किरातशब्दस्यादेवर्णस्य चादेशः स्यात्। चिलाओ। हरिद्रादित्वात् लः। कगचादिना तलोपः। 'म्लेच्छवाच्ये लचादेशौ न हरे कामरूपिणि'। तेन किराओ हरः॥ ३०॥

प्राकृतमञ्जरी

आदेः किरातशब्दस्य वकारस्य चकारता।

विधीयते किरातश्च चिलाओ कथ्यते बुधैः॥३३॥

### मनोरमा

किरातशब्दे आदेर्वर्णस्य 'च' कारो भवति। चिलादो।

### अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य" तथा "आदेर्यो जः" (प्रा. २.३१) इत्यतः 'आदेः' पदद्वयमनुवर्त्तते।

### सूत्रार्थः

संस्कृतस्य किरातशब्दस्य आदिवर्ण 'क्' कारस्यस्थाने प्राकृते 'च्' कारः भवति।

### यथा–

किरातः > चिलादो

"किरातः" इति स्थिते 'किराते चः' (प्रा. २.३३) इत्यनेन सूत्रेण 'क्' इत्यस्य 'च्' कारे "चिरात" इति स्थिते, "हरिद्रादीनां रोलः" (प्रा. २.३०) इत्यनेन सूत्रेण 'र्' कारस्य 'ल्' कारे "चिलात" इति स्थिते, "ऋत्वादिषु तो दः" (प्रा. २.७) इत्यनेन सूत्रेण 'त्' इत्यस्य 'द्' कारे "चिलाद" इति स्थिते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्यप्रथमाभिक्तिएकवचने 'सु' इत्यस्य 'ओत्वे', 'चिलादो' इति रूपंसिद्धम्।

## ३४. कुब्जे खः

### सुबोधिनी

अत्रादेः खः स्यात्। खुज्जो। "खादेशो नम्रदेहत्वे, न कुब्जे पुष्पवाचिनी।" फुल्लइ कुब्जं वसंतम्मि॥ ३१॥

### सञ्जीवनी

कुब्जशब्दे आदेर्वर्णस्य खादेशो भवति। खुजो। सर्वत्र लवरामिति वलोपः। शेषादेशादिना द्वित्वम्। 'खादेशो नम्रदेहत्वे न कुब्जे पुष्पवाचिनी'। फुल्लइ कुब्जं वसंतम्मि॥ ३१॥

प्राकृतमञ्जरी

विधीयते कुब्जशब्दे ककारस्य खकारता।
अनेन विधिना सन्तः कुब्जं खुब्जं प्रचक्षते॥३४॥

मनोरमा

कुब्जशब्दे आदेर्वर्णस्य खकारो भवति। खुज्जो।

अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः अयुक्तस्य तथा "आदेर्योजः" (प्रा. २.३१) इत्यतः "आदेः" पदद्वयमनुवर्त्तते।

सूत्रार्थः

संस्कृतस्य "कुब्ज" शब्दस्य आदि वर्ण 'क्' कारस्य स्थाने प्राकृते 'ख' कारः भवति।

यथा–

कुब्जः > खुज्जो

'कुब्जः' इति स्थिते "कुब्जे खः" (प्रा. २.३४) इत्यनेन सूत्रेण 'क्' इत्यस्य 'ख्' कारे "खुब्ज" इति स्थिते, "सर्वत्र लवराम्" (प्रा. ३.३) इत्यनेन सूत्रेण 'ब्' इत्यस्य लोपे "खुज" इति जाते "शेषादेशयेर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'ज्' इत्यस्य द्वित्वे, "खुज्ज" इति स्थिते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्तिएकवचने 'सु' इत्यस्य "ओ" कारे "खुज्जो" रूपं सिद्धम्।

३५. दोलादण्डदशनेषु डः

सुबोधिनी

एष्वादेर्डः स्यात्। डोला डंडो डसणो॥३२॥

सञ्जीवनी

एषु शब्देषु आदेर्वर्णस्य डकारादेशो भवति। डोला डंडो डसणो। दशनशब्दे जस्शसोर्लोपः। जस्शस्ङस्यांसु दीर्घः इति दीर्घः॥३२॥

**प्राकृतमञ्जरी**

**दोलायां दण्डशब्दे च दशने च डकारता।**

**आदेः स्यात् क्रमशो डोला डण्डो च डसणो मतः॥३५॥**

**मनोरमा**

एषु आदेर्वर्णस्य डकारो भवति। डोला। डंडो। डसणो।

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य" तथा "आदेर्योजः" (प्रा. २.३१) इत्यतः "आदेः" पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

दोला, दण्ड तथा दशन आदि संस्कृत शब्देषु अयुक्तस्य आदि 'द' कारस्य स्थाने प्राकृते 'ड' कारः भवति।

**यथा—**

**दोला > डोला**

"दोला" इति स्थिते "दोलादण्डदशनेषु डः" (प्रा. २.३५) इत्यनेन सूत्रेण 'द्' इत्यस्य 'ड्' कारे डोला रूपं सिद्धम्।

**दण्डः > डण्डो**

"दण्डः" इति स्थिते "दोलादण्डदशनेषु डः" (प्रा. २.३५) इत्यनेन सूत्रेण 'द्' इत्यस्य 'ड्' कारे, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे', "डण्डो" रूपं सिद्धम्।

**दशनः > डसणो**

"दशनः" इति स्थिते "दोलादण्डदशनेषु डः" (प्रा. २.३५) इत्यनेन सूत्रेण 'द्' कारस्य 'ड्' कारे, "डशन" इति जाते, "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'श्' इत्यस्य 'स्' कारे, "डसन" इति प्राप्ते, "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे "डसण" इति स्थिते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन

सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने 'सु' इत्यस्य 'ओत्वे', "डसणो" रूपं सिद्धम्।

**३६. परुषपरिधपरिखासु फः**

**सुबोधिनी**

एष्वादेः फः स्यात् फरुसं फलिहो फलिहा।

**सञ्जीवनी**

एषु शब्देषु आदेर्वर्णस्य फः स्यात्। फरुसं परुषम्, फलिहो फलिहा परिघपरिखयोः। हरिद्रादीनां रो लः इति लः। खघथादिना खघयोर्हत्वम्।

**प्राकृतमञ्जरी**

**परुषे परिघे चैव परिखायां च फो भवेत्।**
**फरुसो फलिहो, तद्वत् फलिहा च त्रयः क्रमात्॥३७॥**

**मनोरमा**

एतेषु आदेर्वर्णस्य फकारो भवति। फरुसो। फलिहो। फलिहा॥

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः 'अयुक्तस्य' तथा "आदेर्यो जः" (प्रा. २.३१) इत्यतः "आदेः" पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

परुषः, परिधः, परिखा आदि संस्कृत शब्दानाम् आदिवर्ण 'य्' कारस्यस्थाने प्राकृते 'फ्' कारः आदिश्यते।

**यथा–**

**परुषः > फरुसो**

'परुषः' इति स्थिते "परुषपरिधपरिखासु फः" (प्रा. २.३६) इत्यनेन सूत्रेण 'प्' इत्यस्य 'फ्' कारे "फरुष" इति स्थिते, "शषोः सः" (प्रा. २.४३) इत्यनेन सूत्रेण 'ष्' इत्यस्य 'स्' कारे 'फरुस' इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्यप्रथमा विभक्तिएकवचने 'सु' इत्यस्य 'ओत्वे', "फरुसो" इति रूपं सिद्धम्।

परिधः > फलिहो

"परिधः" इति स्थिते "परुषपरिधपरिखासु फः" (प्रा. २.३६) इत्यनेन सूत्रेण 'प्' इत्यस्य 'फ्' कारे, 'फरिध" इति जाते "हरिद्रादीनां रो लः" (प्रा. २.३०) इत्यनेन सूत्रेण 'र्' इत्यस्य 'ल्' कारे, "फलिध" इति जाते "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'ध्' इत्यस्य 'ह्' कारे, "फलिह" इति जाते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमाविभक्तिएकवचने 'सु' इत्यस्य 'ओ'त्वे "फलिहो" रूपं सिद्धम्।

परिखा > फलिहा

"पारिखा" इति स्थिते "परुषपरिधपरिखासु फः" (प्रा. २.३६) इत्यनेन सूत्रेण "प्" इत्यस्य 'फ्' कारे, "फरिखा" इति स्थिते, "हरिद्रादीनां रो लः" (प्रा. २.३०) इत्यनेन सूत्रेण 'र्' इत्यस्य 'ल्' कारे, "फलिखा" इति जाते, "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण "ख्" इत्यस्य "ह्" कारे, "फलिहा" इति रूपं सिद्धम्।

३७. पनसेऽपि

सुबोधिनी

'पनसेऽपि पकारस्य फकारादेश इष्यते'। फणसं॥

सञ्जीवनी

'पनसेऽपि पकारस्य फकारादेश इष्यते'। फणसो॥३३॥

मनोरमा

पनसशब्देऽपि 'प्' कारस्य 'फ्' कारो भवति। फणसो।

अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.१) तथा "आदेर्योजः" (प्रा. २.३१) इत्यतः यथाक्रमे 'अयुक्तस्य' तथा 'आदेः' पदद्वयमनुवर्त्तते।

अम्बिका

संस्कृतस्य 'पनस' शब्दस्य आदिवर्ण 'प्' कारस्य स्थाने प्राकृते 'फ्' कारः आदिश्यते।

यथा–

पनसः > फणसो

"पनसः" इति स्थिते "परुषपरिधपरिखासु फः" (प्रा. २.३६) इत्यनेन सूत्रेण 'प्' कारस्य 'फ' कारे, "फनस" इति जाते, "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य "ण्" कारे, "फणस" इति प्राप्ते, "अत औत् सोः" (प्रा. २.३७) इत्यनेनसूत्रेण अदन्तस्यप्रथमाविभक्ति एकवचने 'सु' इत्यस्य "ओत्वे", "फणसो" रूपं सिद्धम्।

**समन्वयः**

"दीप्ति" व्यख्याकारस्यमतेन 'पनस' शब्दः पूर्ववर्त्तीसूत्रे (परुष-परिधपरिखासु फः प्रा. २.३६) समाविष्टे, प्रस्तुतसूत्रमनावश्यकमिति प्रतियते।

परन्तु स्वमतेन इदं प्रतिपाद्यते, परुष, परिध, परिखा एतेषाम् शब्दानांमध्यवर्त्ति वर्णः 'र्' कारः, ततः भामहेन 'पनस' शब्द निमित्तं स्वतन्त्रसूत्रंनिर्मितम्, उच्चारण तथा श्रुतिसुखंत्वात्।

## ३८. बिसिन्यां भः

### सुबोधिनी

अत्रादेर्भः स्यात्। भिसिणी। 'प्रधान्याद् बिसशब्दस्य स्याद् भादेशोऽस्त्रियां तु वा'। भिसं विसं॥३४॥

### सञ्जीवनी

बिसिनीशब्दे आदेर्वर्णस्य भः स्यात्। भिसिणी। 'प्राधन्याद् बिसशब्दस्य स्याद् भादेशोऽस्त्रियां तु वा'। भिसं बिसं बिसमेव॥३४॥

### प्राकृतमञ्जरी

अमुष्मिन् बिसिनीशब्दे वबकारस्यादिवर्त्तिनः।
विधीयते भकारत्वं बिसिनी भिसिनी मता॥

### मनोरमा

बिसिनी शब्दे आदेर्वर्णस्य भकारो भवति। भिसिणी। स्त्रीलिङ्ग निर्देशादिह न भवति - विसं।

**अम्बिका**

"अयुक्तस्यामादौ" (प्रा. २.१) इत्यतः 'अयुक्तस्य' तथा "आदेर्यो जः" इत्यतः "आदेः" पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

संस्कृतस्य स्त्रीलिङ्ग "बिसिनी" शब्दस्य आदि 'ब्' कारस्य स्थाने प्राकृते "भ्" कारः भवति।

**यथा–**

बिसिनी > भिसिणी

"बिसिनी" इति स्थिते "बिसिन्यां भः" (प्रा. २.३८) इत्यनेन सूत्रेण 'ब्' इत्यस्य 'भ्' कारे "भिसिनी" इति जाते, "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण 'न्' कारस्य 'ण्' कारे "भिसिणी" इति रूपं सिद्धम्।

**समन्वयः**

सूत्रे स्त्रीलिङ्ग निर्देशत्वात् केवलं स्त्रीलिङ्गात्मकशब्देषु अयं नियमः प्रयुज्यते। पुंलिङ्गे अयं नियमः न प्रयुज्यते।

**यथा–**

बिसम् > बिसं

**३९. मन्मथे वः**

**सुबोधिनी**

अत्रादेर्वः स्यात्। वम्महो॥ ३५॥

**सञ्जीवनी**

मन्मथशब्दे आदेर्वर्णस्य वादेशः स्यात्। वम्महो। न्मो मः इति मः। तस्य शेषादेशादिनाद्वित्वे खघथादिना थस्य हः॥ ३५॥

**प्राकृतमञ्जरी**

शब्दे मन्मथ इत्यस्मिन् वकारादेश इष्यते।
मकारस्यादिभूतस्य मन्मथो वम्महो मतः॥४०॥

मनोरमा

मन्मथशब्दे आदेर्वर्णस्य व कारो भवति। वम्महो॥

अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः 'अयुक्तस्य', "आदेर्योजः" (प्रा. २.३१) इत्यतः "आदेः" पदद्वयमनुवर्त्तते।

सूत्रार्थः

संस्कृतशब्दस्य "मन्मथ" शब्दस्य आदि वर्ण "म्" कारस्य स्थाने प्राकृते "व्" कारः आदिश्यते।

यथा—

मन्मथः > वम्महो

"मन्मथ" इति स्थते "मन्मथे वः" (प्रा. २.३९) इत्यनेन सूत्रेण 'म्' कारस्य "व्" कारे, "वन्मथ" इति जाते, "न्मोमः" (प्रा. ३.४३) इत्यनेन सूत्रेण 'न्म' इत्यस्य 'म' आदेशे, "वमथ" इति प्राप्ते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'म्' इत्यस्य द्वित्वे "वम्मथ" इति जाते, "खघथधभां हः" (प्रा. २.२७) इत्यनेन सूत्रेण 'थ्' इत्यस्य 'ह्' कारे, "वम्मह" इति प्राप्ते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्यप्रथमाविभक्तिएकवचने "सु" इत्यस्य "ओत्वे", "वम्महो" रूपं सिद्धम्।

४०. लाहले णः

सुबोधिनी

एष्वादेर्णः स्यात्। णाहलो लाहलो। णंगणं लंगलं णंगूलं लंगूलं॥ ३६॥

सञ्जीवनी

एषु शब्देषु आदेर्वर्णस्य णकारादेशो भवति वा। णाहलो लाहलो लाहलमेव। णांगलं लांगलं। णांगूलं लांगूलं। अदातो यथादिषु वा इत्यत्त्वम्। नपुंसके सोर्बिन्दुः इति बिन्दुः॥ ३६॥

सूत्रस्यास्य प्राकृतमञ्जरी टीका नोपलभ्यते।

मनोरमा

लाहलशब्दे आदेर्वर्णस्य णकारो भवति। णाहलो॥

अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य" तथा "आदेर्यो जः" (प्रा. २.३१) इत्यतः "आदेः" पदद्वयमनुवर्त्तते।

सूत्रार्थः

"लाहल" इति संस्कृत शब्दस्य आदि वर्णः 'ल्' कारस्य स्थाने प्राकृते 'ण्' कारः भवति।

यथा—

**लाहलः > णाहलो**

"लाहलः" इति स्थिते "लाहले णः" (प्रा. २.४०) इत्यनेन सूत्रेण 'ल्' इत्यस्य 'ण्' कारे, "णाहल" इति स्थिते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्यप्रथमाविभक्तिएकवचने "सु" इत्यस्य "ओ"त्वे "णाहलो" रूपं सिद्धम्।

**४१. षटशावकसप्तपर्णानां छः**

सुबोधिनी

एष्वादेः छः स्यात्। छट्ठी षष्ठी। छाओ छत्तवण्णो। आदेरिति नाऽनुवर्त्तते॥ ३७॥

सञ्जीवनी

एष्वादेर्वर्णस्य छः स्यात्। छट्ठी षष्ठी। उपरि लोप इत्यादिना षलोपः। शेषस्य द्वित्वे वर्गे युजः पूर्वः इति टः। छप्पओ छम्मुहो षट्पदषण्मुखयोः। उपर्यपि च वक्तव्यो लोपो वर्णान्तरस्य च' इति टणयोर्लोपः। शेषादेशादिना द्वित्वम्। छाओ शावः। छत्तवण्णो सप्तपर्णः। उपरि लोपः इत्यादिना सर्वत्र लवरामिति परेफयोर्लोपः। शेषादेशादिना तणयोर्द्वित्वम्। पो वः इति वः॥ ३७॥

**प्राकृतमञ्जरी**

षट्शब्दे शतशब्दे च सप्तपर्णपदेऽपि च।
स्याच्छत्वं छप्पओ छाओ छत्तिवणो मतः क्रमात्॥४१॥

**मनोरमा**

एतेषामादेर्वर्णस्य छकारो भवति। छट्ठी। छम्मुहो। छावओ। छत्तवण्णो॥ षष्ठी। षण्मुखः। शावकः। सप्तपर्णः॥

**अम्बिका**

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य", "आदेर्योजः" (प्रा. २.३१) इत्यतः "आदेः" पदद्वयमनुवर्त्तते।

**सूत्रार्थः**

षष्, शावकः, सप्तपर्णः आदि संस्कृत शब्देषु आदि वर्ण 'ष्', 'श्', तथा 'स्' कारेषु स्थानेषु प्राकृते 'छ्' कारः भवति।

**यथा–**

**षष्ठी > छट्ठी**

"षष्ठी" इति स्थिते "षट्शावकसप्तपर्णानां छः" (प्रा. २.४१) इत्यनेन सूत्रेण 'ष्' कारस्य 'छ्' कारे, "छष्ठी" इति जाते, "ष्टस्य ठः" (प्रा. ३.१०) इत्यनेन सूत्रेण 'ष्ठ इत्यस्यापि 'ठ्' कारे, "छठी" इति जाते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'ठ्' इत्यस्य द्वित्वे "छठ्ठी" इति प्राप्ते "वर्गेषु युजः पूर्वः" (प्रा. ३.५१) इत्यनेन सूत्रेण 'ठ्' इत्यस्य 'ट्' कारे "छट्ठी" इति रूपं सिद्धम्।

**शावकः > छावओ**

"शावकः" इति स्थिते "षटशावकसप्तपर्णानां छः" (प्रा. २.४१) इत्यनेन सूत्रेण 'श्' इत्यस्य 'छ्' कारे, "छावक" इति जाते, "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' इत्यस्य लोपे, "छावअ" इति स्थिते "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्य प्रथमा विभक्ति एकवचने "सु" इत्यस्य 'ओ' कारे, "छावओ" इति रूपं सिद्धम्।

सप्तपर्णः > छत्तवण्णो

"सप्तपर्णः" इति स्थिते "षट्शावकसप्तपर्णानां छः" (प्रा. २.४१) इत्यनेन सूत्रेण 'स्' इत्यस्य 'छ्' कारे, "उपरि लोपः कगडतदपषसाम्" (प्रा. ३.१) इत्यनेन सूत्रेण संयुक्त 'प्' इत्यस्य लोपे, "छतपर्ण" इति स्थिते, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३.५०) इत्यनेन सूत्रेण 'त्' कारस्य द्वित्वे, "छत्तपर्ण" इति जाते, "पोवः" (प्रा. २.१५) इत्यनेन सूत्रेण 'प्' कारस्य 'व्' कारे, "छत्तवर्ण" इति प्राप्ते, "सर्वत्र लवराम्" (प्रा. ३. ३) इत्यनेम सूत्रेण 'र्' इत्यस्य लोपे, "शेषादेशयोर्द्वित्वमनादौ" (प्रा. ३. ५०) इत्यनेन सूत्रेण 'ण्' इत्यस्य द्वित्वे, "छत्तवण्ण" इति जाते, "अत ओत् सोः" (प्रा. ५.१) इत्यनेन सूत्रेण अदन्तस्यप्रथमाविभक्तिएकवचने "सु" इत्यस्य 'ओत्वे', "छत्तवण्णो" रूपं सिद्धम्।

## ४२. नोणः सर्वत्र

### सुबोधिनी

अयुक्तस्य नस्य णः स्यात्। घणत्थणी। अयुक्तस्येति किम्? अन्तरं। अत्राऽयुक्तत्वं स्वभिन्नहलन्तरेण सम्बोध्यं बोद्धव्यम्। तेन उण्णअपओहरेत्यादौ नकारेणैव युक्तस्य स्यादेव। अयुक्तस्येति अधिकारो निवृत्तः॥ ३८॥

### सञ्जीवनी

अयुक्तस्येत्येव। न इत्यक्षरं षष्ठ्यन्तम्। अयुक्तस्य वर्णान्तरेणायुक्तस्य नकारस्य णकारादेशो भवति। घणत्थणी घनस्तनी। स्तस्य थः इति थः। तस्य द्वित्वे वर्गे युजः पूर्वः इति तः। णअणं वअणं। अयुक्तस्येति किम्? अन्तरा अन्तरा कन्दरा कन्दरा। बन्धुरा बन्धुरा। कथं तर्हि उण्णअं पण्णअं इत्यादौ णत्वम्। वर्णान्तरेण युक्तमिति विशेषयितव्यम्। तेन यत्रान्येन वर्णेन सह नकारस्य योगः तत्रायुक्तस्येत्यनेन विशेषः। 'आदौ क्वापि नकारस्य णत्वभावोऽपि दृश्यते'। णूणं नूनम्॥ ३८॥

### प्राकृतमञ्जरी

निवृत्तादिरयुक्तस्येत्यधिकारस्ततः परम्।

सर्वत्र नस्य णत्वं स्यात् पानं पाणं नद णई॥४२॥

## मनोरमा

आदेरिति निवृत्तम्। सर्वत्र नकारस्य णकारो भवति। णई। कणअं। वअणं। माणसिणी॥ नदी॥ कनकम्॥ वचनम्। मनस्विनी॥

## अम्बिका

"अयुक्तस्यानादौ" (प्रा. २.१) इत्यतः "अयुक्तस्य", ("आदेर्योजः" (प्रा. २.३१) इत्यतः "आदेः" इति पदस्य अनुवर्त्तनम् समाप्तम्) पदमनुवर्त्तते।

## सूत्रार्थः

संस्कृतशब्देषु सर्वत्र (आदि, मध्य तथा अन्त्य) विद्यमानेषु तथा असंयुक्त "न्" ध्वनेः स्थाने प्राकृते "ण्" कारः भवति।

**यथा–**

### नदी > णई

"नदी" इति स्थिते, "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण आदि 'न्' कारस्य 'ण्' कारे, "णदी" इति जाते "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'द्' इत्यस्य लोपे "णई" रूपं सिद्धम्।

### कनकम् > कणअं

"कनकम्" इति स्थिते "नोणः सर्वत्र" (प्रा. २.४२) इत्यनेन सूत्रेण मध्य 'न्' कारस्य 'ण्' कारे, "कणक" इति जाते, "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इत्यनेन सूत्रेण 'क्' कारस्य लोपे, "कणअ" इति स्थिते, "सोर्बिन्दुर्नपुंसके" (प्रा. ५.३०) इत्यनेन सूत्रेण नपुंसके 'सु' इत्यस्य बिन्दुत्वे (अनुस्वारे) "कणअं" रूपं सिद्धम्।

### वचनम् > वअणं

अस्य शब्दस्य प्रक्रियां "कगचजतदपयवां प्रायो लोपः" (प्रा. २.२) इति सूत्रस्य 'च' लोपप्रसङ्गे द्रष्टव्यम्।

## समन्वयः

अन्यध्वनिना सह युक्त 'न्' कारस्य न णत्वम्।

